अधिकारि (नारायणपुर, चिताउन), श्रीसूर्यनाथ पौडेल (चुँदिबिसि-कुसुन्ने), श्रीबाबुकृष्ण ढकाल (हाँडिगाम), श्रीविन्ध्येश्वरीप्रसादशुक्ल (गङ्गबलिया, रुपन्देहि) इत्यादि हुनुहुन्थ्यो।

काशितिरका विद्द्वान् ब्राह्मणहरुलाइ गोनिष्क्रयद्रव्यदान गर्न अनुमति माग्दा प्रस्तुत गरिएको प्रार्थनापत्र तललेखिए-अन्सार्को थियो —

"पण्डित श्रीरामप्रसाद त्रिपाठीजीप्रभृति काशिके प्रतिष्ठित विद्द्वान् ब्राह्मणोंसे अनुग्रहपूर्वक दीगइ व्यवस्थाके तथा नेपालि विद्द्वान् ब्राह्मणोंसे दीगइ शुभानुज्ञाके अनुसार हमारे भाइ सोमराज आचार्यसे यथाशास्त्र यथाशक्ति किएगए भारतवर्ष-बहिर्गमन-विदेशिविधर्मि-विजातीयसहभोजनजातिदुष्टाभक्ष्यभक्षणादिप्रायश्चित्तस्थानापन्न-षडब्दकृच्छ्रप्रत्याम्नाय-गोनिष्क्रयद्रव्यदानरूप गोदानोंमेंसे और अन्य गोदानोंमेंसे कतिपय गोदानका द्रव्य आपको अर्पित करनेकी अनुमति दें।"

तदनुसार अनुमति दिनि ब्राह्मणहरुलाइ द्रव्य अर्पित गरिएको थियो। तेसरि अनुमति दिइ अर्पित द्रव्य ग्रहणगर्निहरुमा श्रीरामप्रसाद त्रिपाठि, श्रीकरुणापति त्रिपाठि, श्रीकुबेरनाथ शुक्ल, श्रीकालिकाप्रसाद शुक्ल, श्रीरामचन्द्र द्विवेदि, श्रीरामयत्नशुक्ल, श्रीयुगलकिशोरमिश्र, श्रीनरेन्द्रनाथपाण्डेय, श्रीउमाशङ्करशुक्ल, श्रीजयप्रकाश त्रिपाठि, श्रीराजेन्द्रप्रसादत्रिपाठि, श्रीशिवशङ्करदुवे, श्रीवंशीधरगौड, श्रीविश्वनाथ वामनदेव, श्रीलक्ष्मीकान्त दीक्षित, श्रीजोषणराम पाण्डे अग्निहोत्रि (पुत्त्रवधूद्वारा); एर्कर रामन् नम्पूतिरि (राजमन्दिरम्, पालक्काट जिला, केरल), नारायण अग्निशर्मन् अग्निशर्मन् नम्पूतिरि (वृन्दावनम्, त्रिशूर जिला, केरल) इत्यादि हुनुहुन्थ्यो।

यो सोपोद्घात सपरिशिष्ट भारतवर्षबहिर्गमनविधर्मिविदेशिसहवाससहभोजनादि-दुरितप्रायश्चित्तव्यवस्था-ग्रन्थ प्रकाशित गर्न आवश्यक द्रव्यराशि आमा गङ्गामाया देवीले आँफ्ना थैलिबाट दिनुभएको हो। देशले र कालले टाड़ाका व्यक्तिहरुलाइ पनि यस विषयको यथार्थ जानकारि प्राप्त हुन सकोस् भनि यो सङ्ग्रह मुद्द्रित प्रकाशित गरिएको हो।

— शिवराज आचार्य कौण्डिन्न्यायन

काठमाण्डु,

२०४९।८।२१

## काशिनिवासिभिर् विद्वद्भिर् ब्राह्मणैर् दत्ता भारतवर्षबहिर्गमन-विधर्मिविदेशिसहवाससहभोजनादि-दुरित-

## प्रायश्चित्तव्यवस्था

श्रीहरिःशरणम्

चतुस्त्रिंशद्वर्षवयस्कः कश्चन नैपालदेशीयो ब्राह्मणः इञ्जीनियरिङ्गकलाया विशिष्टं ज्ञानमवाप्तुममेरिकादेशं गत्वा वर्षद्वयेन तज्ज्ञाने दीक्षितो भूत्वा स्वदेशं प्रत्यागच्छत् । तत्र निवसता तेन म्लेच्छसम्पर्कोऽभक्ष्यभक्षणं शिखासूत्रादिपरित्यागश्चापि व्यधायि । अधुना सामाजिक-बहिष्कारमसहमानः स्वधर्मे स्थातुमिच्छन् स पुनरेतस्माद् धर्महीनदेश-गमनात् सर्वथा पराङ्मुखतां चाभिलषन् समाजग्राह्यत्वाधायकं प्रायश्चित्तं वाञ्छति । तेन सह सम्पृक्ता पत्नी अनुपनीतःपुत्रः अविवाहिता पुत्री च प्रायश्चित्तेन शुद्धिं वाञ्छन्ति । अतस्तदनुगुणः प्रायश्चित्तविधिर् निर्दिश्यते—

(क) [१] तत्र "न जनमियान् नान्तमियात्" इति बृहदारण्यकश्रुत्या (१।३।१०) "न गच्छेन् म्लेच्छविषयम्" इति विष्णुस्मृतिवचनेन (८४।१), "म्लेच्छदेशे न च व्रजेत्" इति शङ्खस्मृतिवचनेन (१४।३०) च समुद्र-पारम्लेच्छदेशगमनं निषिद्धम् । एतन्निषेधलङ्घने च "आर्यावर्तमतिक्रम्य विना तीर्थक्रियां द्विजः । आज्ञां चैव तथा पित्रोरैन्दवेन विशुद्ध्यति" इति वीरमित्रोदयपरिभाषाप्रकाशोद्धृतवचनस्य (पृ. ६०), "सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गान्ध्रान् गत्वा संस्कारमर्हति" इति मिताक्षरादिधृतवचनस्य (३।२९२; पृ. ६०८), "बहूनामेकधर्माणामेकस्यापि यदुच्यते । सर्वेषां तद् भवेत् कार्यमेकरूपा हि ते स्मृताः" इति मिताक्षरा-धृतवचनस्य (३।२६५; पृ. ५६४) चैकवाक्यतया विचारेण चान्द्रायणं पुनःसंस्कारश्च प्रायश्चित्ततया निश्चीयते ।

[२] ग्रामसूकरमांसादिजातिदुष्टाभक्ष्यभक्षणे च पातित्यप्रयोजकत्व-ज्ञानाभावकृते "छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम्। पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद् द्विजः॥ अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् ।यतिचान्द्रायणं वापि" इति मनुवचनात् (५।१९,२०) सान्तपनं यतिचान्द्रायणं वा प्रायश्चित्तम् । "विड्वराहग्रामकुक्कुटगोमांसभक्षणेषु सर्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते पुनः सस्कारं कुर्यात्" इति विष्णु-स्मृतिवचनात् (५१।४) प्रायश्चित्तान्ते पुनः संस्कारश्च कार्यः । अभ्यासे तदनुसारं प्रायश्चित्तं वर्धनीयम् ।



[३] म्लेच्छान्नभोजने च पातित्यप्रयोजकत्वाज्ञानकृते "चण्डालः पुल्कसोम्लेच्छःश्वपाकः पतितस् तथा । एते पञ्च समाख्याताः पञ्च-पातकिनां समाः" इति जाति-भास्करोद्धृत स्कन्दपुराणचातुर्मास्यमाहात्म्य—प्रकरणस्थवचनस्य(पृ.४०७)"चाण्डाल-पुल्कस-म्लेच्छ-भिल्ल-पारसिका—दिकान् । महापातकिनश् चैव स्पृष्ट्वा स्नायात् सचैलकः" इति प्रायश्चित्त-मयूखधृतवचनस्य (१९२पृ.), "बहूनामेकधर्माणामेकस्यापि यदुच्यते । सर्वेषां तद् भवेत् कार्यमेकरूपा हि ते स्मृताः" इति मिताक्षराधृतवचनस्य(३।२६५, पृ. ५६४), "चाण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत् । बुद्धिपूर्वे तु कृच्छ्राब्दं पुनः संस्कारमेव च" इति पराशरमाधवीयधृतवचनस्य (प्रायश्चित्तकाण्डे पृ. ८८) च विचारेण चान्द्रायणं प्रायश्चित्तं निर्धार्यते । सिद्धस्य म्लेच्छान्नस्य भोजने तु "सिद्धं भुक्त्वा पराकः" इति पराशर-माधवीयधृतविष्णुवचनात् (प्रायश्चित्तकाण्डे पृ.८७) पराकः प्रायश्चित्त—मुच्यते। अभ्यासे तु तदनुसारं प्रायश्चित्तं वर्धनीयम् ।

[४] म्लेच्छसहभोजने च "शूद्रेण सह भुक्त्वान्नं चान्द्रायण-मथाचरेत्"इति मिताक्षराधृतवचनस्य(३।२८९,पृ.५९६) च विचारेण चान्द्रायणं प्रायश्चित्तमिति निर्धार्यति । अभ्यासे तदनुसारं प्रायश्चित्तं वर्धनीयम् ।

[५] म्लेच्छानुग्रहेणार्जितस्य द्रव्यस्य विषये च " कर्मणा गर्हितेनैव यद् वित्तं समुपार्जितम् । तस्य त्यागेन शुध्यन्ति धर्मस्यान्वेषणेन वा ॥ अप्सु प्रास्येत तद् द्रव्यमन्यायेन यदागतम् । उपयुक्ताऽवशिष्टं च देयं वा ब्रह्मवादिने" इति पराशरमाधवीयधृतवचनस्य (पृ. ४३१) च विचारेण तद् द्रव्यमुपयुक्तावशिष्टं ब्राह्मणाय देयमिति व्यवस्था दीयते ।

[६]शिखासूत्रधारणस्नानसन्ध्योपासनादिब्रह्मकर्मलोपे चिरकालकृते च "शिखां छिन्दन्ति ये के चिद् वैराग्याद् वैरतो पि वा । पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः"इति लघुहारीतस्मृतिवचनस्य(श्लो. १८) "विना यज्ञो-पवीतेन भुङ्क्ते तु ब्राह्मणो यदि । स्नानं कृत्वा जपं कुर्वन्नुपवासेन शुध्यति"इति लघुहारीतस्मृतिवचनस्य(श्लो.२३)"वेदोदितानां नित्यानांकर्मणां समतिक्रमे । स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्" इति मनु- वचनस्य (११।२०३)च विचारेणोपवासः पुनःसंस्कारश्च प्रायश्चित्ततया निर्धार्यते ।

एतेषां प्रायश्चित्तानामनुष्ठानेऽशक्तौ तु "कर्तारं देशकालौ च प्रमाणं करणं क्रियाम् । अवेक्ष्य च बलं चैव प्रायश्चित्तं विधीयते" इति पराशरमाधवीयधृतवचनस्य (पृ. १००) "प्रायश्चित्तं यथोद्दिष्टं न शक्यं दुर्बलादिभिः । इष्यतेऽनुग्रहस्तेषां लोक-सङ्ग्रहकारणत् ॥ एको नार्हति तत्

कर्तुमज्ञो वा नाऽप्यनुग्रहम् । धर्मज्ञा बहवो विप्राः कर्तुमर्हन्त्यनुग्रहम्" इति पराशरमाधवीयधृत-वचनस्य (पृ. ९९), "अथवा ब्राह्मणास्तुष्टाः सर्वं कुर्वन्त्यनुग्रहम् । सर्वान् कामानवाप्नोति द्विजसम्पादितैरिह" इति पराशर-वचनस्य (६।५४), "जन्मप्रभृति पापानि बहूनि विविधानि च । अर्वाक् तु ब्रह्महत्यायाः षडब्दं कृच्छ्रमाचरेत् ॥ प्रत्याम्नाये गवां देयं साशीति धनिना शतम् । तथाष्टादशलक्षाणि गायत्र्या वा जपेद् बुधः" इति मिताक्षरादि-धृतवचनस्य (३।३२६, पृ.६३८), "जन्मप्रभृति यत् किञ्चित् पातकं चोपपातकम् । तावदावर्तयेत् कृच्छ्रं यावत् षष्टिगुणं भवेत्" इति मिताक्षरा-धृतवचनस्य (३।३२६, पृ. ६३९), "यदप्यसकृदभ्यस्तं बुद्धिपूर्वमघं महत् । तच् छुध्यत्यब्दकृच्छ्रेण महतः पातकादृते" इति मिताक्षराधृतवचनस्य (३।३२६, पृ.६३९), "प्रायश्चित्तं च कृत्वा वै भोजयित्वा द्विजोत्तमान् । सुवर्णमाषकं दद्यात् ततः शुद्धिर् विधीयते" इति यमस्मृतिवचनस्य (श्लो. ६३) च विचारेण प्रकृते चोक्तानां सर्वेषां पापानां विशुद्धये षडब्दकृच्छ्र-प्रत्याम्नायतया गवां साशीति शतं तदशक्तौ तत्प्रत्याम्नायद्रव्यं ब्राह्मणेभ्यो देयम्, तदन्ते च पुनरुपनयनं प्रयुज्य यथाशक्ति ब्राह्मणभोजनं विधाय ब्राह्मणेभ्यो दक्षिणा च देया इति सानुग्रहमुपदिश्यते । एवं प्रायश्चित्ते कृते स पुरुषो वैदिकब्राह्मणधर्माचरणेऽधिकारी संग्राह्यश्चभवति। वाराणसीस्थ-भारतधर्ममहामण्डलस्या-ऽधिष्ठात्रा परमपूज्येन स्वामिश्रीदयानन्दमहाराजेनापि स्वरचितधर्मकल्पद्रुमस्य तृतीयभागे आपद्धर्मप्रकरणे एतद्विषये प्रोक्तम् — "यदि राष्ट्रहिताय विशिष्टज्ञानार्जनाय वा कश्चिद् धर्महीनदेशं गच्छति, म्लेच्छसम्पर्कमपि करोति, तावताऽपि सो ऽधार्मिको न वचनीयः" इति । अतश्चात्र विषये शिष्टसम्मतिरपि दृश्यते । मिताक्षरापराशरमाधवीयादि-महानिबन्धाऽनुल्लिखित-नारायणस्मृत्यादि-वचनानामपि विचारे तु उक्ते प्रायश्चित्ते कृते स पुरुषो वैदिकाचार्यत्वगुरुत्वयाजकत्वपुरोहितत्वप्रतिग्रह-वर्जमन्येषु वैदिकब्राह्मणधर्मेषु अधिकारी भवति ।

(ख) "न म्लेच्छदेशे श्राद्धं कुर्यात्" इति विष्णुस्मृतिवचनस्य (८४।१), "म्लेच्छदेशे तथा रात्रौ सन्ध्यायां च विशेषतः । न श्राद्धमाचरेत् प्राज्ञो म्लेच्छदेशं न च व्रजेत्" इति शङ्खवचनस्य (१४।३०), "म्लेच्छदेशे तथा रात्रौ सन्ध्यायां विप्रवर्जिते । न श्राद्धमाचरेद् विद्वान् न चाऽऽकाशे कथंचन" इति निर्णयसिन्धुधृतवचनस्य (पृ.२६८), "उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद् भारतं नाम भारती यत्र सन्ततिः॥... इतः स्वर्गश्च मोक्षश्च मध्यश्चाऽन्तश् च गम्यते । न खल्वन्यत्र मर्त्यानां



कर्म भूमौ विधीयते" इति विष्णुपुराणवचनस्य (२।३।१,५) च विचारे पातित्याक्रान्तेनोक्तेन पुरुषेण म्लेच्छदेशे म्लेच्छगृहे कृतस्य कर्मणो-ऽविधिकृतत्वेना ऽकृतत्वात् पूर्वोक्तप्रायश्चित्ताऽऽचरणपूर्त्यनन्तरं पितृनिधन-निमित्तकं दशदिवसीयमाशौचमञ्जलिदानं च कार्यम् । तस्य पुरुषस्य पारस्कर-गृह्यसूत्रानुसारित्वे कनिष्ठपुत्रत्वे च तेन त्रिदिवसीयमेवाऽऽ-शौचमञ्जलिदानं च वापि कृत्वा कृतार्थेन च भवितुं शक्यम् ।

(ग) पूर्वोक्तविधेन प्रायश्चित्तीयेन पत्या सह चिरकालं सम्पृक्तया ब्राह्मण्या स्त्रिया उपनयनवर्जं पत्युः प्रायश्चित्तस्यार्धं प्रायश्चित्तं कार्यम् । बालकाभ्यां च उपनयनवर्जं पितुः प्रायश्चित्तस्य पादमितं प्रायश्चित्तं कार्यम्, "स्त्रीणामर्धं प्रदातव्यं वृद्धानां रोगिणां तथा । पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः" इति मिताक्षरादिधृतविष्ण्वादिवचनात् ।

अत्र प्रायश्चित्तकरणे मयूखोक्तसामान्य-प्रायश्चित्तप्रयोगविधिरनु-सरणीयः।गङ्गोदकेनाऽपिस्नानम् ब्राह्मणचरणोदकप्राशनं च तत्र विधेयम् ।

आशौचपालनजलदानादिकार्यानन्तरं यथासौविध्यं श्रीमद्भागवतमहा-पुराणस्य साप्ताहिकं श्रवणम्, भविष्योत्तरपुराणान्तर्गतस्य श्रीमदादित्यहृदय— स्तोत्रस्य एकादशावृत्तिकं श्रवणं च करणीयम् । सर्वदा यथावसरं भगवत्-स्मरणं च कार्यम् । तत आद्ध्यात्मिकोऽप्युद्धारः सम्पद्यते इति उपदिश्यते । भगवन्नामजपो यथाशक्ति कर्तव्यः, यथाकालं च रामेश्वरदर्शनं कर्तव्यम् ॥

**उक्त व्यवस्था दिनि विद्वान्हरु --**

१. पं.श्रीरामप्रसादत्रिपाठी, सम्मानिताध्यापकः, सं.सं.वि.वि., वाराणसी
२. पं.श्रीकरुणापतित्रिपाठी भूतपूर्वकुलपतिः, सं.सं.वि.वि., वाराणसी
३. पं.श्रीकुबेरनाथशुक्लः भूतपूर्वकुलपतिःप्रस्तोता च, सं.सं.वि.वि., वाराणसी
४. पं.श्रीकालिकाप्रसादशुक्लः वेदवेदाङ्गसङ्कायाध्यक्षचरः, सं.सं.वि.वि., वाराणसी
५. पं.श्रीशिवजी उपाध्यायः उपाचार्यः (साहित्यविभागस्य), सं.सं.वि.वि., वाराणसी
६. पं.श्रीरामयत्नशुक्लः व्याकरणविभागाध्यक्षः, सं.सं.वि.वि., वाराणसी
७. पं.श्रीकैलासपतित्रिपाठी साहित्यविभागाध्यक्षः, सं.सं.वि.वि., वाराणसी
८. पं.श्रीयुगलकिशोर मिश्रः वेदविभागाध्यक्षः, सं.सं.वि.वि., वाराणसी
९. पं.श्रीनरेन्द्रनाथपाण्डेयः साहित्यसंस्कृतिसङ्कायाध्यक्षः सं.सं.वि.वि., वाराणसी
१०. पं.श्री-उमाशङ्करशुक्लः उपाचार्यः (ज्योतिषविभागस्य), सं.सं.वि.वि., वाराणसी
११. पं.श्रीजयप्रकाशत्रिपाठी प्राध्यापकः (वेदान्तविभागस्य) सं.सं.वि.वि.; वाराणसी

ज्येष्ठकृष्णद्वितीयायां गुरुवासरे २०४८ वै.।

# परिशिष्ट

## १

## अनुवादककृतः प्रायश्चित्तोपदेशः

भोः सोमराजशर्मन्,

शिखासूत्रधारण-स्नानसन्ध्योपासनादि-ब्रह्मकर्म-लोपे चिरकाल-कृते तत्पापनिरसनाय उपवासः पुनस्संस्कारश्च कर्तव्यः ।

लौकिकविद्या-ग्रहणादिकार्याय समुद्रपारस्थितविदेशगमने तत्पाप-निरसनाय चान्द्रायणङ् कृत्वा पुनस्संस्कारश्च कर्तव्यः ।

वर्षद्वयपर्यन्तं विधर्मि-विदेशि-विजातीयान्नभोजन-तत्सहभोजनादिके कृते विधर्मिविदेशिविजातीयदत्तधनादानतदुपभोगादिके च कृते चान्द्रायणम्, पराकः, उपयुक्तावशिष्टस्य विधर्मिविदेशिविजातीयदत्तधनस्य ब्राह्मणेभ्यो दानं चेति प्रायश्चितं कर्तव्यम् ।

ग्रामसूकरादि-जातिदुष्टाभक्ष्य-भक्षणे पातित्यप्रयोजकत्वज्ञानाभावकृते सान्तपनं यतिचान्द्रायणं वा कर्तव्यम्, पुनस्संस्कारश्च कार्यः। पूर्वोक्तानाम् पापानामभ्यासे तदनुसारं यथायथमधिकम्प्रायश्चित्तङ् कर्तव्यम् ।

किन्तु देशकालसामर्थ्यादिविचारेण उक्तानां प्रायश्चित्तानां त्वया यथावत् कर्तुम् अशक्यतायाः प्रतीयमानत्वात् "प्रायश्चित्तयँ यथोद्दिष्टं न शक्यं दुर्बलादिभिः । इष्यतेऽनुग्रहस्तेषां लोकसङ्ग्रहकारणात् ॥ एको नार्हति तत् कर्तुमज्ञो वा नाऽप्यनुग्रहम् । धर्मज्ञा बहवो विप्राः कर्तुमर्हन्त्यनुग्रहम्" इति शास्त्रव्यवस्थाया विचारणेन "जन्मप्रभृति पापानि बहूनि विविधानि च।अर्वाक् तु ब्रह्महत्यायाः षडब्दं कृच्छ्रमाचरेत् ॥ प्रत्याम्नाये गवां देयं साशीति धनिना शतम् । तथाऽष्टादशलक्षाणि गायत्र्या वा जपेद् बुधः" इत्यादीनां स्मृतिवचनानाम्, काशिस्थ-विद्वद्विप्रदत्तव्यवस्थायाश्च परिशीलनेन पूर्वोक्तानां सर्वेषाम् पापानां तादृशानामन्येषां च यावज्जीवकृतपापानां निरासाय षडब्द-कृच्छ्रप्रत्याम्नायरूपेण गवां साशीति शतम्, यथाशक्त्युपकल्पितं तन्निष्क्रय-द्रव्यं वा ब्राह्मणेभ्यस्त्वया देयम्, यथाशक्ति ब्राह्मणेभ्यो भोजनं दत्वा दक्षिणा च देया, ततः पुनरुपनयनम् प्रयोक्तव्यम् इति सानुग्रहं प्रायश्चित्त मुपदिश्यते । एवं प्रायश्चित्ते कृते त्वम् उक्तेभ्य उक्तविधेभ्यो ऽन्येभ्यश्च सर्वेभ्य एव पापेभ्यो मुक्तः पूतः शुद्धो वैदिकब्राह्मणस्वधर्माचरणे-ऽधिकारी सङ्ग्राह्यश्च भविष्यसि ॥







प्रायश्चित्तार्थिने प्रायश्चित्तोपदेशङ् कुर्वाणोऽनुवादकःसत्कृता ब्राह्मणाश्च

## २

## सङ्गृहीत व्यवस्थापत्रमा नपरेका तर अतिमहत्त्वपूर्ण स्वसङ्कलित कतिपय धर्मशास्त्रवचन

१. धर्मनिर्णय कल्ले गर्नि भन्नि विषयमा याज्ञवल्क्यको (१।९) वचन--

चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥

२. नजान्निहरुका त दस हज्जारका हुलहरुले भनेको कुरो पनि धर्म हुँदैन भन्नि मनुवचन (१२।११३)—

एकोऽपि वेदविद् धर्मं यं व्यवस्येद् द्विजोत्तमः।
स विज्ञेयः परो धर्मो नाऽज्ञानामुदितोऽयुतैः॥

३. शास्त्र जान्नि नै भए पनि शास्त्रमर्यादा तोड्निलाइ धर्मनिर्णयपरिषद्मा नराख्नु भन्नि वचन (पराशरमाधवीय, प्र. भा., पृ.१६०)—

शास्त्रज्ञा दुष्टकर्माणः प्रतिकूलास्त्वसूयकाः ।
हैतुका भिन्नमर्यादाः परिषत्त्वे विवर्जिताः ॥

४. वेदविद् र तिनका वचनको पावनता बुजाउनि वचन (अत्रि.श्लो. १४२)

वेदशास्त्राण्यधीते यः शास्त्रार्थं च निषेवते ।
तदाऽसौ वेदवित् प्रोक्तो वचनन् तस्स्य पावनम् ॥

५. शास्त्रवचन नभै तेसै गरेका प्रायश्चित्तले चोख्विँदैन भन्नि वचन (पराशरमा.प्र. भा., पृ.१०२)—

यद् विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते ।
न तेन शुद्धिमाप्नोति प्रायश्चित्ते कृतेऽपि सः ॥

६. धर्मशास्त्रको वचनको उल्लेख्व गरेर गर्न पर्नि मुख्व्य प्रायश्चित्त सुनाएपछि मात्र यथोचित अनुग्रह गर्नु, वचनको ख्वास्तै नगरि एक्कैचोटि अनुग्रह नगर्नु भन्नि वचन (पराशरमा.प्र. भा., पृ. १६२)--

वचः पूर्वमुदाहार्यं यथोक्तं धर्मवक्तृभिः ।
पश्चात् कार्यानुसारेण शक्त्या कुर्युरनुग्रहम् ॥
न हि तेषामतिक्रम्य वचनानि महात्मनाम् ।
प्रज्ञानैरपि विद्वद्भिः शक्यमन्यत् प्रभाषितुम् ॥

७.प्रेमले, लोभले, डरले र अज्ञानले अनुग्रह गरेमा अनुग्रह गर्निलाइ पाप सर्च भन्नि पराशरको (६।५६) वचन—

स्नेहाद् वा यदि वा लोभाद् भयादज्ञानतोऽपि वा।
कुर्वन्त्यनुग्रहं ये तु तत् पापं तेषु गच्छति॥

८.नजानिकन प्रायश्चित्तको उपदेश गर्निलाइ पातकिको पाप सर्च भन्नि देवलको वचन (श्लो. ५७)—

यो दातुं न विजानाति प्रायश्चित्तं द्विजोत्तमः।
शुद्धिन् ददाति चान्यस्मै तदशुद्धेः स भाजनम्॥

९.वेदविहित वा स्मृतिविहित प्रायश्चित्त छोडेर अरु प्रायश्चित्त दिन हुँदैन भन्नि यमस्मृतिको वचन (श्लो. ५९)—

अश्रौतस्मार्तविहितं प्रायश्चित्तं वदन्ति ये।
तान् धर्मविघ्नकर्तॄंश्च राजा दण्डेन पीडयेत्॥

१०.शास्त्रप्रमाण विना प्रायश्चित्त दिनि ब्रह्मघाति हुन्छ भन्नि वचन (हेमाद्रि. प्रा. ख.,पृ. ९८७)—

ज्यौतिषं व्यवहारं च प्रायश्चित्तं चिकित्सितम्।
विना शास्त्रेण यो ब्रूयात् तमाहुर् ब्रह्मघातकम्॥

११.आत्तिएका उचित प्रकारले प्रायश्चित्त माग्निलाइ जान्नि ब्राह्मणले प्रायश्चित्तको उपदेश नगरे त्यो ब्राह्मण प्रायश्चित्त माग्नि पातकि जस्तै पातकि हुन्छ भन्निवचन(उत्तराङ्गिरस७।१, मिताक्षरा३।३००, पृ. ६१४)—

आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः।
जानन्तो न प्रयच्छन्ति ते यान्ति समतां तु तैः॥

१२.पाप गरेको लोकले थापाएकामा लोकले थापाउनि गरेर पर्षद्मा दोषख्यापन गरेरै प्रायश्चित्त गर्नपर्छ भन्नि याज्ञवल्क्यको(३।३००) वचन—

विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम्।
अनभिख्यातदोषस्तु रहस्यं व्रतमाचरेत्॥

१३.म्लेच्छावासमा एक पक्ष बस्नि माञ्छे पातकि हुञ्च भन्नि वचन (हेमाद्रि.प्रा.ख.,पृ.३७१)—

मासं कारागृहे वासो नौभिर् यात्रा दिनत्रयम्।
म्लेच्छावासे तथा पक्षं यो वसेत् स तु पातकी॥



१४.भारतवर्षमत्रै पारलौकिककर्मगर्नि स्थानहो भन्निवचन (भाग.५।१७।११)—

तत्रापि भारतमेव वर्षं कर्मक्षेत्रम्।

(द्रष्टव्य-भागवत ५।१९।१९,अग्नि. ११८।१-२,कूर्म.१।४७।२१-२३,ब्रह्माण्ड.१६।१-१५,ब्रह्म. १७।१-५,मत्स्य.११४।५-१४, मार्कण्डेय. ५४।७-१०,, वामन. १३।१०-१४, लिङ्ग. १।५२।२५-३२, वायु. ४५।७५-७८, स्कन्द. प्रभास.११।१३-१४)

१५.पातकिका-स्वभाव-अन्सार् जपादि प्रायश्चित्तको व्यवस्था हुञ्च भन्नि वचन (पराशरमा.प्र. भा.,पृ. ४७७)——

धर्मनिष्ठास् तपोनिष्ठाः कदाचित् पापमागताः।
जपहोमादिकं तेभ्यो विशेषेण विधीयते॥
नामधारकविप्रा ये मूर्खा धर्मविवर्जिताः॥
कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद् विशेषतः॥
धनिना दक्षिणा देया प्रयत्नविहिता तु या।
एवं नरविशेषेण प्रायश्चित्तानि दापयेत्॥

१६.गोनिष्क्रयद्रव्य कति चाँइञ्च भनि व्यवस्था गर्नि षट्त्रिंशन्मतको वचन (प्रायश्चित्तेन्दुशेखर, पृ.७)——

धेनुः पञ्चभिराढ्यानाम् मध्यानां त्रिपुराणिका।
कार्षापणैकमूल्यापि दरिद्राणां प्रकीर्तिता॥

१७.प्रायश्चित्तमा ब्राह्मणभोजन-र-हिरण्यदानको अङ्गता देखाउनि वचन (अङ्गिरःस्मृति, श्लो. १३६) ——

यावद् विप्रा न पूज्यन्ते अन्नदानहिरण्ययोः।
तावच् चीर्णव्रतस्यापि तत् पापं न प्रणश्यति॥

१८.शुद्धिको प्रकाशनको आवश्यकता देखाउनिवचन (परा.मा.प्र.पृ.१८३)—

शृणुष्व भो इदं विप्र यद्यदादिश्यते व्रतम्।
तत्तद् यत्नेन कर्तव्यमन्यथा ते वृथा भवेत्॥
यदा च ते भवेच् चीर्णं तदा शुद्धिप्रकाशनम्।
कार्यं सर्वप्रयत्नेन शक्त्या विप्राभिभाषितम्॥

१९. पतितले अपतितलाइ अञ्जलि नदिनु भन्नि वचन (याज्ञ. ३।५)--

न ब्रह्मचारिणः कुर्युरुदकं पतितास् तथा।

२०.पतितादिले आँफ्नु देह शुद्ध नगरि अपतितलाइ दिएको र अपतितले देह शुद्ध नभएका पतितादिलाइ दिएको पिण्डपाँनि पाँउन पर्निले पाँउदैन बिचैमा हराउँच भन्नि गरुडपुराणको वचन (वेङ्कट.सं.प्रेत.४।१५७)—

अशुद्धेन तु यद् दत्तमुद्दिश्याऽशुद्धमेव च ।
नोपतिष्ठति तत् सर्वमन्तरिक्षे विनश्यति ॥

२१.विधर्मिले अञ्जलिदानादि नगर्नु भन्नि वृद्धमनुवचन (मिताक्षरा ३।५)—

क्लीबाद्या नोदकङ् कुर्युः स्तेना व्रात्या विधर्मिणः ।
गर्भमर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥

२२.आचारभ्रष्टले र आचारभ्रष्टलाइ अञ्जलि दिन् हुँदैन भन्नि वचन (षडशीति, श्लो.८५, निर्णयसिन्धु, निर्णयसागर, सप्तम सं. पृ.४०८)—

स्वीयाचारादपि भ्रष्टाः पतिता ये च दूषिताः ।
न कुर्युरुदकं ते वै तेभ्योप्यन्ये न चैव हि ॥

२३.सदाचारि बन्धुको मात्र अञ्जलिदान र आशौच गर्नु भन्नि वचन (आङ्गिरसस्मृति, श्लो.१३७-१३९)—

सतामेव हि बन्धूनां कर्म कुर्यात् प्रयत्नतः ।
भ्रष्टानामपि तुच्छानां पतितानां विकर्मिणाम् ॥
न कुर्वीत क्रियां यत्नादपि स्नानं समाचरेत् ।
असतां पतितानां च भस्मान्तं सूतकं स्मृतम् ॥

२४.विधिपूर्वक गरे मत्रै शास्त्रीयकर्मको फल पाँइञ्च भन्नि वचन (योगयाज्ञवल्क्यवचन, हेमाद्रि.श्राद्ध. पृ. ४८३-४८४)—

विधिदृष्टन् तु यत् कर्म करोत्यविधिना तु यः ।
न किञ्चित् फलमाप्नोति क्लेशमात्रं हि तस्य तत्॥
विधिहीनं भावदुष्टं कृतमश्रद्धया च यत् ।
तद् हरन्त्यसुरास्तस्य मूढस्य त्वकृतात्मनः ॥

२५.विनाशास्त्र आँफ्ना विचारले गरेको पारलौकिक कर्म निष्फल हुञ्च भन्नि वचन (पराशरमा. प्रथम भाग, पृ. २९१)—

स्वाभिप्रायकृतं कर्म यत् किञ्चिद् ज्ञानवर्जितम् ।
क्रीडाकर्मेव बालानां तत् सर्वं निष्प्रयोजनम् ॥

२६.पारलौकिक कर्म शास्त्रअन्सारै गर्नपर्च भन्नि वचन(गीता १६।२३,२४)—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥
तस्माद् शास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥





## प्रस्तुत प्रायश्चित्तका विषयमा भूतपूर्वबडागुर्जु जुननाथ पण्डितले स्वहस्ताक्षरले लेखि दिनुभएको विचार

अद्यत्वे बहुशो नेपालदेशवासिनः अमेरिकादिदेशान् गत्वा अध्ययनादिकार्यं समाप्य पुनः स्वदेशं प्रत्यागच्छन्तीति सर्वविदितम् । तत्र समुद्रयात्रा म्लेच्छदेशवासो वा सनातनवैदिकधर्मविरुद्धो धर्मशास्त्रगम्यः । तत्प्रायश्चित्तञ्च शास्त्रगम्यं परिशील्यते ।

अपरं च स्वदेश एव अभक्ष्यभक्षणादिरूपं तथा विविधपातकोपपातकादिकार्यं द्विजातिभिः क्रियमाणं दृष्ट्वा श्रुत्वा च मनो व्यथते । तत्र प्रायश्चित्ताय प्रामाणिकी व्यवस्था राष्ट्रे नास्तीति भृशं दोदूयते चेतः । सामाजिकोऽयं विप्लवः प्रवर्धमानः समाधातुं शक्यते नवेति संशयास्पदम् ।

एवं कतिपयैः सत्कुलोत्पन्नैरपि पुरुषैः विदेशेषु गत्वा सनातनधर्मविरुद्धाचाराः संसर्गवशाद् धर्मविश्वासह्रासाज् ज्ञानविरहाद् वा कर्तुं शक्यन्ते। तेषु कैश्चिदाचारविधिनिषेधयोस्त्यागमात्मीयमुखरवेण ब्रुवन्ति केचिन्नैव प्रकाशमानयन्ति । एवं कोलाहलं सनातनधर्मिणां धार्मिके जगति कर्णकटु अनुभवामः ।

अस्यां विषमपरिस्थितौ "विहितस्याननुष्ठानान् निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इत्यादिशास्त्रं कथन्तरां प्रवर्तते । इत्थं प्रतिकूलां सामाजिकभूमिकामधिशयाना वयमाचारशिक्षां कामयन्तोऽपि न कर्तुं पारयामः ।

अस्मिन्नवसरे ममात्मीयः कश्चित् अमेरिकादेशे कंचित् कालं नीत्वा तत्र ज्ञानादज्ञानाद् वा ग्रामशूकरग्रामकुक्कुटभक्षणेन मलिनस्यात्मनो देहस्य शुद्ध्यै प्रायश्चित्तं प्रष्टुमागतः । स कथं प्रायश्चित्तेन शोध्य इति ममात्मा व्यग्रतां व्याकुलतां वाऽनुभवति ।

प्रायश्चित्तं प्रकाशं कुर्वता तेन हिन्दुसंस्कृतिभ्रष्टस्य समाजस्य उपहासः सोढव्यः स्यात् । अपि च स्वेच्छाचारे प्रगतिशीलो यूनां समाजः प्रायश्चित्तमाचरन्तं तं लगुडानां प्रहारैर् निहन्यादिति च शङ्कते मनः ।

सोपानत्काः सन्ति रथ्यास्वदन्तः स्वैरं पाकानन्यवर्गैर् वसन्तः ।
चूडां सूत्रं संस्कृतिं स्वां हसन्तः स्तब्धा नैके दृष्टिमायान्ति हन्त ॥
गेहेगेहे वर्णधर्माः प्रलुप्ता नाभ्यस्यन्ते वेदमन्त्राः प्रदीप्ताः ।
प्रायो यूनामार्यबुद्धिर् विनष्टा भ्रष्टाः श्रेष्ठाः सन्ति कष्टेषु शिष्टाः ॥

इत्थं समाजचित्रणं दृष्ट्वा सहसा पुरातनी रीतिस्त्रस्यति ।

एवं प्रतिकूलदशां जानन्नपि कश्चित् प्रायश्चित्तं कर्तुकामो यदि पृच्छेत् तदा रहस्यं प्रायश्चित्तं वक्तव्यम्। रहस्यं प्रायश्चित्तमपि विधीयमानमस्ति धर्मशास्त्रे ।गायत्रीजपो होमो

वेदपाठः पुरुषसूक्तरुद्रसूक्तादिजपस् तीर्थस्नानमित्येवमादयो रहस्य-प्रायश्चित्तरूपेण उपलभ्यन्ते ।

तत्र रहस्यप्रायश्चित्तं विदुषां सन्निधौ गत्वा अन्यकृतपापच्छलेन पृष्ट्वा ज्ञात्वा कर्तव्यमिति वर्णितमस्ति । अद्य प्रकृतेऽपि प्रष्टा तथैव प्रतीयते । "अमेरिकादेशे कियत्कालं स्थित्वा गृहे समागतः एकसंवत्सरान्तरितं पितृमरणं श्रुत्वा तदाशौचं शास्त्रोक्तं कर्तुकामः देहशुद्ध्यै प्रायश्चित्तं कामयते । तत्र विदेशे विड्वराहग्रामकुक्कुटादीनां भक्षणमपि कृतमिति स्वमुखरवेण वदन् स कथं शोध्यः" इति प्रश्नस्वरूपम् । अत्र तु अन्य एव प्रष्टा अन्यश्च कर्ता इति ज्ञायते । तेन रहस्यप्रायश्चित्तरूपेणैव प्रस्तुतं प्रायश्चित्तमपि अनुष्ठेयं स्यात् ।

प्रायश्चित्तनिबन्धेषु प्रायश्चित्तविवेक-प्रायश्चित्तेन्दुशेखर- प्रायश्चित्तमिताक्षरा-मयूख-स्मृत्यर्थसारादयः सन्ति प्रायश्चित्तज्ञानाय प्रामाणिका निबन्धाः ।

शिष्टाकोपाधिकरणे तन्त्रवार्तिके-"तथा च प्रायश्चित्तादिदानकाले यो वाक्यमात्मीय — मन्यकविकृतं वा श्लोकं सूत्रं वोच्चार्य मानवादिप्रायश्चित्तं दद्यान् न कश्चिदपि धर्मार्थं प्रतिपद्येत । वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता । नित्यानामभिधेयानां मन्वन्तरयुगादिषु ॥ तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः । वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥ तथा च 'मनोर्ऋचः सामिधेन्यो भवन्ति' इत्यस्य विधेर् वाक्यशेषे श्रूयते- 'मनुर् वै यत् किंचिदवदत् तद् भेषजं भेषजतायै' इति, प्रायश्चित्ताद्युपदेशवचनं पापव्याधेर् भेषजम्" इति कुमारिलभट्टैः सर्वस्मृतिषु मनुस्मृतेः प्रायश्चित्तोपदेशो मूर्धन्य इति प्रतिपादितमस्ति । तस्माद्धेतोः 'पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् । लशुनं गृञ्जनं चैव मत्या जग्ध्वा पतेद् द्विजः ॥ अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत् । यतिचान्द्रायणं वापि शेषेषूपवसेदहः' इति मनुवचनयोरुक्तं प्रायश्चित्तं सर्वथैव ग्राह्यं मन्तव्यम् । तत्र पातित्यप्रयोजकत्वज्ञानाभावेन पलाण्ड्वादेर् भक्षणं यदि स्यात् तदैव भक्षणकर्ता प्रायश्चित्तं कामयते नान्यथा । प्रकृते तथैव घटितमुपलभ्यते । अतः मनूक्तद्वितीश्लोकोक्तं सान्तपनकृच्छ्रं प्रातिस्विकं प्रायश्चित्तं भवेत् यतिचान्द्रायणं वा । सान्तपनं च 'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश् च कृच्छ्रं सान्तपनं स्मृतम्' इत्याकारकम् । सप्तदिनसाध्यं व्रतमेतत् । तदशक्तौ धेनुद्वयदानम् यतिचान्द्रायणं वा ।

प्रायश्चित्तविवेके याज्ञवल्क्यः 'पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् । लशुनं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ।' एतज् ज्ञानतः सकृत् । अत्र च पुनरुपनयनं कार्यमित्यत्र विष्णुः'मलानां मद्यानां वाऽन्यतरस्य प्राशने चान्द्रायणं कुर्यात् । लशुनपलाण्डु-गृञ्जनतद्गन्धिविड्वराहग्रामकुक्कुटगोमांसभक्षणेषु सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते भूयःसंस्कारं कुर्यात्' इति प्रतिपादितम् । प्रायश्चित्तान्ते पुनरुपनयनसंस्कारः गृह्यसूत्र-व्याख्याने संस्कारगणपतौ, धर्मसिन्धौ, संस्कारकौस्तुभे, प्रायश्चित्तेन्दुशेखरे च प्रतिपादितम् ।

स्नेहात् प्रायश्चित्तसंकोचो निषिद्धः । किन्तु देशकालशक्त्यनुसारेणानुकल्पः शास्त्रसम्मतः । आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात् इति ममाऽभिसन्धिरित्यलम् ।



१. ग्रामसूकरकुक्कुटमांसाद्यभक्ष्यभक्षणे

२. कस्यचित् प्रकाशिते बहुकालपर्यन्तशिखासूत्रस्नानसन्ध्यादिनित्यकर्मलोपे

३. लौकिकविद्यार्जनाय म्लेच्छदेशगमने म्लेच्छान्नभोजने म्लेच्छदत्तधनादाने म्लेच्छसहभोजने

४. उपर्युक्तदुष्कर्मवता पत्या सह सम्पृक्तायाः प्रायश्चित्तम्

५. म्लेच्छदेशनिवाससमये उपर्युक्तदुष्कर्मवता पुरुषेण पितुर्निधनं श्रुत्वा दिनत्रयपर्यन्तं जलाञ्जलिदाने कृते स्वदेशप्राप्तेन तेन तत्सम्बन्धे कदा केन प्रकारेण किं किं कार्यम् ।

प्रश्नेष्वेतेषु प्रथमः प्रश्नो दत्तोत्तरः । द्वितीयतृतीययोः प्रश्नयोरुत्तरमुच्यते -

"अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु" इति याज्ञवल्क्यवचनव्याख्यायां मिताक्षरायां चान्द्रायण-प्राजापत्य-पराक-यावक-तुलापुरुषादीनामनुक्तप्रायश्चित्तेषु पापेषु पापप्रणाशकत्वेनाऽवधारणात् प्रकृते म्लेच्छान्नभोजनतत्सहवाससहितशिखासूत्रादित्याग-पूर्वकनित्यकर्मलोपे प्रतिपदोक्ततत्तत्पापप्रायश्चित्तोपदेशानुपलम्भात् सर्वसुकरं प्राजापत्यं कृच्छ्रं प्रायश्चित्तमिति स्वीकर्तव्यतया तथा देशकालावस्थानुरोधेन पादकृच्छ्रस्य कर्तव्यतयाऽपि अवधारणं युज्यते इति प्रतिभाति । किन्तु "यथावयो यथाकालं यथाप्राणञ्च ब्राह्मणे । प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर् धर्मपाठकैः ॥ तस्मात् कृच्छ्रमथाप्यर्धं पादं वापि विधानतः । ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत्" इति हारीतवचनात्, तथा "स्नेहाद् वा यदि वा लोभान् मोहादज्ञानतोऽपि वा । कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति" इति पराशरवचनात् तथा "एको नार्हति कर्तुं तदनूचानोऽप्यनुग्रहम् । धर्मज्ञा महान्तो विप्राः कर्तुमर्हन्त्यनुग्रहम् ॥ एकविंशतिसङ्ख्याकैर् मीमांसान्यायपारगैः । वेदाङ्गकुशलैश्चैव परिषत्त्वं प्रकल्पयेत्" इत्यङ्गिरसोक्तेः अद्यत्वे अध्यात्मवित्तमाभावाच् च एकेन प्रायश्चित्तोपदेशः अनुग्रहश्चाऽनुचितः प्रतीयते । अतः अत्रार्थे धर्मतत्त्वविदां विदुषां प्रायश्चित्तव्यवस्था ग्रहीतव्या ।

चतुर्थप्रश्नस्योत्तरम् -

"संसर्गदोषः पापेषु" इति कलिवर्ज्येषु गणनात् कलौ संसर्गदोषो नास्तीति माधवाचार्यानुयायिनः । किन्तु व्यवहार्यतासिद्ध्यै नागेशभट्टप्रभृतिभिः प्रायश्चित्तं प्रतिपाद्यते । पातित्यापादकत्वं नास्ति किन्तु दोषस्तु संक्रामत्येव । अतः स्त्रीणामपि प्रायश्चित्तम् । तत्र दुष्कर्मकृता संपृक्तायाः पत्न्याः प्रायश्चित्तन्तु प्रकृते उपनयनं प्राजापत्यं च विहाय पत्युः प्रायश्चित्तस्यार्धमेव प्रदातव्यम्, "स्त्रीणामर्धं प्रदातव्यं वृद्धानां रोगिणां तथा । पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः" इति विष्णुस्मृतेः ।

पञ्चमप्रश्ने इदमेव वक्तव्यम् -

प्रायश्चित्तोत्तरं जलाञ्जलिदानपूर्वकं दशदिनपर्यन्तं दिव्यलोकं गतस्य पितुराशौचं पालनीयम्, अविधिपूर्वकं कृतमकृतमेवेति शास्त्रनिर्णयात् पूर्वं त्रिदिनमात्रमाशौचं परिपालितमपि विधिहीनमित्यलम् ।

२०४६ आश्विन ३० गते कार्तिककृष्णद्वितीया

४

## प्रस्तुत प्रायश्चित्तका विषयमा श्रीतीर्थराजआचार्यबाट प्राप्त पत्र

भाइ श्रीशिवराज आचार्य

प्रासङ्गिक प्रायश्चित्तका विषयमा तिम्रो प्रश्न अनुसार प्रायश्चित्तार्ह व्यक्तिको नियमत्यागजन्यप्रत्यवाय अधिक प्रायश्चित्तापेक्षी बुझिएकाले मेरो मन्तव्य यस प्रकार छ —

जातानुतापस्य भवेत् प्रायश्चित्तं यथोदितम् । XX म्लेच्छैः सहोषितो यस्तु पञ्चप्रभृतिविंशतिम् । वर्षाणि, शुद्धिरेवोक्ता तस्य चान्द्रायणद्वयम् ॥ XXX तस्मात् कृच्छ्रमथाप्यर्धं पादं वापि विधानतः । ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत् ॥ इत्यादि वृद्धहारीतका वचन र देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः । प्रायश्चित्तं प्रकल्प्यं स्याद् यत्र चोक्ता न निष्कृतिः । याज्ञ० लघुदोषे ह्यनादिष्टे प्राजापत्यं समाचरेत् । मिताक्षरा- यी सबै वचनको समन्वय गर्दा- एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः । यथाकथञ्चित् त्रिगुणः प्राजापत्यो ऽयमुच्यते ॥ यो याज्ञवल्क्यको वचन अनुसार पादकृच्छ्र वा प्राजापत्य गर्नु उचित होला ।

पिताजीको अन्त्येष्टिका संबन्धमा - छोराले जैले सुने पनि १० दिनै आशौच वार्नु पर्ने हुनाले १० दिनसंम नियममा रहेर प्रेतशब्दउच्चारण नगरी संबन्ध र शर्मन् शब्द समेत प्रयोगगरी तिलतोयाञ्जलि दिनुपर्ने देखिन्छ ।

यस्मा सबैको परामर्शबाट जे ठहर्छ त्यही गर्नु राम्रो होला, विशेष गरी ज्ञानवयोवृद्ध वडागुरुज्यू श्रीजुननाथगुरुको निर्देशन शिरोधार्य हुन्छ भन्ने मलाइ लाग्छ ।

२०४६।५।१० दाजु तीर्थराज

५

## प्रस्तुत प्रायश्चित्तका विषयमा

### श्रीलोकनाथढकाल-प्राचीनन्यायाचार्यबाट प्राप्त विचार —

श्रीशिवराजमहोदय !

त्वदीयप्रश्नविषये मदीया संमतिरियम् -

**यो** मानवः शास्त्रनिषिद्धं म्लेच्छदेशगमनादि कर्म कृत्वा तदुद्भवपापापनोदाय प्रायश्चित्तं चिकीर्षति **चेत्** तेन यथाशास्त्रं शास्त्रनिष्णातानां स्वधर्मनिष्ठानां धर्मविदां विदुषां पर्षदं **समायोज्य** तदग्रे गत्वा स्वकर्मकथनपुरःसरं प्रायश्चित्तं प्रार्थनीयम् । तच्छ्रुत्वा पर्षदा यादृशं तत्प्रायश्चित्तमुपदिश्यते तादृशं तत् सविधि विधातव्यमिति ।

२०४६-४-२८ संमन्ता - लोकनाथढकालः







पुनरुपनयने सङ्कल्पप्रयोगादिकयँ यज्ञोपवीतदानञ् च

श्रीः

# छोरावुहारीहरुलाई उपदेश

ब्राह्मण योनिमा जन्म पायेका हामी ऋषिमुनिका सन्तानले देवता पितृ वरत्र परत्र सवैको विचार राखी न्याय्य धर्म्य वृत्ति लियेर जीवनयात्रा चलाई ब्राह्मणजन्म सफल गराउनपर्छ । केवल अन्नवस्त्रादि भौतिक उपकरण जोड्न मात्र नलागी वैदिकधर्मको यथाशक्ति अनुसरण गरी आध्यात्मिक उन्नतिको मार्ग पनि लिनुपर्दछ।

तसर्थ हाम्रा शास्त्रानुसारी परंपराका शिखा सूत्र स्नान सन्ध्योपासन भक्ष्याऽभक्ष्य पेयाऽपेय कार्याऽकार्य आदिका र संस्कार तथा देवपितृ कार्य समेतका ब्राह्मणाचारहरुको तिमिहरु सवैले यथाशक्ति राम्रो पालना गर्नुपर्छ। कुनै वेला आपत्कालमा अथवा आफ्नु आमरणान्त जीविका र परिवारको पालनपोषण पनि धनवेगर नहुनेहुँदा धनार्जनार्थ विदेश पढन जाँदा र कडा रोग लागी चिकित्सार्थ विदेश जानुपर्दा तेसमा शिथिलता आये पनि (पढेर) आरोग्य सिद्ध गरेर आयेपछी यथोचित प्रायश्चित्त गरी आफ्ना मार्गमा चल्नुपर्छ । एसो गर्नाले कल्याण हुञ्छ । एतिञ्जेल आचारमा शिथिलता गर्नेहरुले पनि अव तुरुन्तै यथोचित प्रायश्चित्त गरी आचारमा रहनपर्छ । सवै दाजुभाईमा परस्परमा सम्मान आदर आड मर्यादा गर्नै गरी सवै मिलिजुलि सरसल्लाहले लौकिक व्यावहारिक काम गर्नै गर्नुपर्छ ।

मेरा इ कुरा नलिई लोकनिन्दित भ्रष्टाचारैमा हिड्नेलाई म गालि गर्छु। तेस देखी म खूसि हुन्न । तेस्ता अनाचारिले मेरो काजक्रिया गर्दा मलाई तार्दैन उल्टो शास्त्रमा बताईयेका नरकमा जान्छु ।

**कविराज नरनाथशर्मा आचार्य**

स्वाध्यायशाला सरस्वतीमार्ग लाजिंपाट
काठमाण्डु नेपाल
२०४३ साल फागुन ५ गते

पण्डित कविराज-नरनाथ-आर्चाय-कृत सुभाषित-सङ्ग्रहबाट उद्धृत

## कतिपय महत्त्वपूर्ण पद्द्य -

### विद्द्या

आँमाले सरि पालि बाबु सरि मै हित्मा सदा लाउँछे
स्वास्नीले सरि खेद् हटाइ मनमा आनन्द बर्षाउँछे ।
नोकर् झैंइ् धन केइ्-न-केइ घरमा रोज्रोज भित्र्याउँछे
विद्द्याले गुरुझैंइ् दिएर उपदेश् आपत्ति पञ्छाउँछे ॥

विद्द्या ठुलो असल सम्पति हो अमूल्ल्य
विद्द्वान्कनै नृपहरू पनि मित्रतुल्ल्य ।
गर्छन्, बहूत सुख दिञ्छ शिकाइदिञ्छ
विद्द्या भएन त पुरुष् पशुमा गनिञ्छ ॥

### धर्म

छोडी कर्म ति लोकनिन्दित कपट् त्यागेर सोझो भई
गर्नूपर्दछ धर्म-कर्म जनले शुद्धाऽऽचरण्मा रही ।
छोडी पक्ष समानभाव सबमा राखेर काम्काज् गरे
लोक्मा चल्दछ कीर्ति एइ् गरि बडा जीवन् बिताई तरे ॥

### सत्त्य

हिंसामा द्विज-गाइ-निम्ति सँगिमा हाँसो हुँदा ख्यालमा
प्राणै-सङ्कटको कुरा र युवती-स्त्री-हेरुका चालमा ।
कन्न्यार्थी वरको बिहा गरिदिँदा वृत्ती कुनैको भया
ढाँटेको पनि पाप छैन यतिमा श्रीशुक्रले यो कह्या ॥



### न्याय

निन्दा गरून् इ दुनियाँ अथवा सराउन्
आओस धन् बहुत या त हओस नौसान् ।
पाओस बाँच्न अथवा उ मरोस ऐलेइ्
जे होस् बडो जन बिरीत् गरदैन कैलेइ् ॥

### वीरता

बूढो होस गलोस घेर दिन त्यो मोकै रहोस् ता पनी
हात्ती सम्म लडाइ पी रगत पो हिँण्न्या म वीर् हुम् भनी ।
एस्तो ली अभिमान सिंह टिपि झार् खाँदैन जस्तै गरी
ठूलो जन् पनि दुःखमा पनि त नीच् गर्दैन काम् तेइ्सरी ॥

### पराक्क्रम

बूटा झार्हरु आँफुदेखि निहुर्न्या तिन्लाइ छाड्दिञ्छ यो
ठूलो भै ननिहुर्नि वृक्षकन पो ढाली उखेल्दिञ्छ यो ।
एस्तो गर्दछ वायु सोहि रितले तेजी वडो जन् पनी
ठूलैमा अभियोग गर्दछ ठुलो आँफ्नू पराक्क्रम् पनी ॥

### उद्द्योग

आलस्स्य यो शरिरको छ अघोर शत्रू
सारा बिगारि यसले गरिदिञ्छ पत्रू ।
उद्द्योग-जाँगर पितासरिको छ मित्र
एसले त दिञ्छ धनधान्न्य बहूत् पवित्र ॥

जूआ, तास्, सहवास रण्डिसँगको एस्ता कुलत् दूर् गरी
गर्नू काम् दिनमा धनार्जन हुन्या तृष्णा मनैमा धरी ।
घर्मा जन् जति छन् सबैकन इलम् मानीस-अन्सार् दिनू
काल् यो फाल्न बिकाममा त जनले हूँदैन, शिक्षा लिनू ॥

कैलेइ् मर्दिन फेरि हुन्न म बुडो एस्तो लिई चित्तले
धन् जम्मागरने र शास्त्र पढने काम् गर्नु खुब् बिज्ञले ।
जो छन् धर्म असल् ति गर्नकन ता मर्छू कि भोली भनी
सम्झी देह अनित्य गर्नु झट यो बात् शास्त्र भञ्छन् पनी ॥

## महापुरुषको लक्षण र चरित्र

धन्को आशय मात्र राखिकन काम् गर्छन् त ती हुन् निचा
धन्-इज्जत् दुइको त आशय लिन्या मध्यम् भनिञ्छन् ति ता ॥
आशा धेर् धनको नराखि अभिमान् इज्जत् सुकीर्ती खडा
राख्न्या मन् दिइ काम गर्छन भन्या उत्तम् तिनै हुन् बडा ॥

एक् डल्ली दिनु खान खुस् भइ कुकुर् हल्लाइ पुच्छर् अती
देखाऊँछ लडेर पेट मुख सब् बाँकी नराखी रती ।
देउ् केइ् हात्तिहरू त हेर्छन ढिलो सन्मान् गरे खाञ्छन
आर्काको चिज खान हेर ति ठुला जन् खुप् कठिन् मांञ्छन ॥

जस्तो मालति फूल फुल्छ वनमा की ता सडी जाञ्छ त्यो
की ता मानिसका उ पुग्छ शिरमा एइ् दुइ काम् गर्छ त्यो ।
तेस्तै धीर सुबुद्धि जन् पनि सबै जन्का उपर्मा रही
गर्छन् काम कि ता ति फ्याँकिन गया वन्मा तपस्वी भई ॥



श्री गणेशायनमः ॥

## अथ स्कन्दपुराणवैष्णवखण्डाऽयोध्यामाहात्म्यतृतीयाध्यायानुसारी चतुरशीतिपूजाविधिः[1]

एतद् व्रतं चतुरशीतितमे वर्षे कुर्यात् । गुरु-शुक्रास्तादिरहित उत्तरायणे (ज्येष्ठ-) पौर्णमास्यां कुर्यात् ।

अथ प्रयोगः । पूर्वदिने प्रसन्नहृदयो नद्यादौ स्नात्वा सन्ध्यादिदैनिकविधिं कृत्वा लवणरहितं शुद्धं हविष्यान्नं दिनस्यचतुर्थयामे एकाशनं कुर्यात् । सायंसन्ध्यां कुर्यात् ।

चतुरशीतिपूजादिने (पूर्णिमायाम्) धर्मरतमनसा प्रातःस्नानसन्ध्यादिकं नित्यकर्म कृत्वा गोमयोपलिप्ते पूजास्थाने पूजासामग्रीं सम्पाद्य शुद्धासने शुद्धवस्त्रं नवीनयज्ञोपवीतं [illegible] पवित्रधारणं कृत्वा यत् त्वगस्थिस्थितं पापं देहे तिष्ठति मामके । प्राशनं पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् इतिमन्त्रेण वेदमन्त्रेण मन्त्रितं पञ्चगव्यं प्राश्य [illegible] बद्ध्वा स्वस्तिवाचनं पठेत् । श्रीमहागणाधिपतये नमः । इष्टदेवतायै नमः । कुलदेवतायै नमः । ग्रामदेवताभ्यो नमः । उमामहेश्वराभ्यां नमः । सर्वेभ्यो देवेभ्यो नमः । ब्राह्मणेभ्यो नमः । निर्विघ्नमस्तु । विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं [illegible] सर्वकार्यार्थसिद्धये ॥ ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ इति ।

ततः कर्मपात्रविधिना कर्मपात्रं कृत्वा अपवित्रः पवित्रो वेति कर्मसामग्रीमात्मानं च सिञ्चेत् । ततो देहशुद्ध्यर्थं प्रथमं प्रायश्चित्तगोदानं कुर्यात् । नमो गोभ्य इति गां सम्पूज्य आकृष्णेनेति देयब्राह्मणं च सम्पूज्य कर्मपात्रोदकं गोपुच्छेन स्वशिरसि अभिषिञ्चेत् मनो मे तर्पयतेति मन्त्रेण । कुशजलसहितं गोपुच्छमादाय हरिः ॐ तत्सत् ३ [illegible] देशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रवरस्यामुकवेदाद्ध्यायिनोमुकशर्मणो मम [illegible] पूजनकर्म कर्तुं कायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पृश्याऽस्पृश्य-[illegible]गम्यागम्यादिनिषिद्धकर्मकृतदोषनिवृत्तिपूर्वकं देहशुद्ध्यर्थम् इमां गां [illegible] अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे तत् सन् न मम इति

---

1 [illegible] उपनयनसंस्कारादिजस्तो नित्य कर्म नभै काम्य पौराण कर्म भएकाले यो [illegible] नगरि नहुनि कर्म हैन, समर्थ व्यक्तिले शास्त्रविधि पुऱ्याइ गर्नपर्नि काम्य कर्म हो [illegible] अविवेकि गतानुगतिकलोकमा असमर्थै भएपनि चौरासिपूजा गर्चु भन्नि माञ्छे [illegible] चौरासिपूजा गराइदिनपरेकामा खोजि हुँदा फेलापरेको, खोलाटोलामा [illegible], अनभिज्ञ कर्मकाण्डिहरुले सार्दसार्दै विकल र भ्रष्ट पारेको "चतुरशीतिपूजाविधि"लाइ अल्पशक्तिअल्पसाधन व्यक्तिहरुका लागि प्रयोगमा ल्याइदिनपर्दा [illegible] सुगृहीतनामा पण्डित कविराज नरनाथ आचार्यले यथामति परिष्कृत गरि प्रयोगमा ल्याउनिगर्नुभएको थियो । वाँहाँबाट तेसरि परिष्कृत भएको यो पद्धति अद्ध्येता-[illegible] समक्ष आपाततः देखिएका साधारण त्रुटिहरु सच्याइ सम्पादन गरेर याँहाँ प्रस्तुत गरिएको छ ।

सङ्कल्प्य ब्राह्मणाय दद्यात् । ततः कपिले सर्वदेवानामित्यादिना गोप्रार्थनां कृत्वा दानप्रतिष्ठाद्रव्यं दद्यात् ।

ततः प्रतिज्ञासङ्कल्पं कुर्यात् । हरिः ॐ तत् सत् ३ इत्यादि देशकालौ संकीर्त्य अमुकगोत्रोमुकप्रवरोमुकवेदाद्ध्यायी अमुकनामाहं मम श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थम् एतज्जन्म-पूर्वजन्मकृतकायिक-वाचिक-मानसिक-सांसर्गिक-गार्मिक-बैजिक-ज्ञाताज्ञाता-स्पृश्यस्पर्शनाभोज्यभोजनागम्यागमनादिब्रह्महत्यान्तसकल-निन्द्यकर्मदोषोपशान्त्यर्थं देहान्ते चन्द्रलोकप्राप्त्यर्थं च चन्द्रसहस्रदर्शनव्रतोद्यापनरूपेण षोडशसु प्रतिमासु चन्द्रपूजनम् तस्य यथायथं पूर्वाङ्गत्वेन उत्तराङ्गत्वेन च दीपकलशगणेशपूजनम् रक्षाबन्धनपूजनम् ब्राह्मण-वरणपूर्वकं पुण्याहवाचनम् चन्द्रहरिपूजनम्, ब्राह्मणद्वारा सोमोत्पत्त्याख्यानपाठम् सोमसूक्त-पाठम्, गोदानम् कलशप्रतिमादानम् पूर्णपात्रदानम् भगवतश्चन्द्रहरेः पूजनम् (सतिसम्भवे मातृकापूजनम् आभ्युदयिकश्राद्धम् होमम् द्विजदम्पतिपूजन) चाऽहं करिष्ये इति । ततो होमोपि कर्तुं शक्यते तर्हि स्वसूत्रोक्तपद्धत्या अग्निं स्थापयेत् ।

ततो दीपं प्रज्वाल्य संपूज्य कलशस्थापनविधिना कलशं संस्थाप्य कलशस्कन्ध-प्रदेशे देवताः सम्पूज्य गणेशपूजनं रक्षाबन्धनपूजनं च कृत्वा ब्राह्मणवरणपूर्वकं पुण्याह—वाचनं च कुर्यात् ।

ततः सति सम्भवे मातृकापूजनम्, आभ्युदयिकश्राद्धं च कुर्यात् ।

ततः अग्निस्थापनमपिकृतं चेत् कर्मस्थलस्यैशानदिग्भागे अन्यथा कर्मस्थल—मध्ये चन्द्रपूजनार्थमष्टदलं पटे विलिख्य तन्मध्ये तण्डुलैर्मण्डलं विधाय तदुपरि तीर्थादिजलपूर्णं कलशं स्थापयित्वा तन्मुखे पात्रं निधाय तत्र पुष्पाक्षतोपरि (माषकपरिमितसुवर्णनिर्मितां) चन्द्रहरिप्रतिमां स्थापयेत् । अष्टदलकाद् बहिः षोडश दलानि निर्माय तेषु तण्डुलैर् मण्डलानि कृत्वा तदुपरि गोदुग्धपूर्णान् कुम्भान् स्थापयित्वा तन्मुखेषु पात्राणि निधाय तेषु पुष्पाक्षतोपरि (प्रत्त्येकं षोडशमाषकमितरजतनिर्मिताः) षोडश चन्द्रप्रतिमाः स्थापयेत् ।




ततः शङ्खार्घ्यं सपुष्पफलचन्दनं सम्पाद्य मधुपर्कं च सम्मेल्य पञ्चामृतानि च पृथक् पृथगुपकल्प्य मध्यस्थकलशे स्थापितायां प्रतिमायां नाममन्त्रेणावाहनादिपूर्वकं



[illegible] सप्तोपचारैश्चन्द्रहरिं[1] पूजयेत् । ततः सोमोत्पत्त्याख्यानपठनाय[2] स्वशाखास्थ-सोमसूक्तमन्त्रपठनाय[3] च ब्राह्मणौ ब्राह्मणं वा वृत्वा कर्मणि नियुज्य न्यासपूर्वकं षोडशसु

---

१ यो चन्द्रहरिपूजन अयोध्यामा गै चन्द्रहरिका अगिल्तिर चन्द्रसहस्र-दर्शनव्रतोद्यापन गर्नु भन्ने स्कन्दपुराणको वचन(वैष्णवखण्ड८।३।११२) भएकाले अयोध्या गै चन्द्रहरिका अगिल्तिर चन्द्रसहस्रदर्शनव्रतोद्यापन गर्न पर्निमा तेसो गर्न नसके पनि चन्द्रहरिलाइ कर्मस्थलमा आवाहन गरि पूजेर उक्त व्रतोद्यापनकर्म गर्नु उचित मानेर गरिएको देखिञ्च ।

२ सोमोत्पत्त्याख्यान मत्स्यपुराणका तेइसौं अद्देमा "ऋषय ऊचुः । सोमः पितॄणामधिपः कथं शास्त्रविशारद । तद्वंश्या ये च राजानो बभूवुः कीर्तिवर्धनाः ॥१॥ सूत उवाच । आदिष्टो ब्रह्मणा पूर्वमत्रिः सर्गविधौ पुरा । अनुत्तमं नाम तपः सृष्ट्यर्थं तप्तवान् प्रभुः ॥२॥ सदानन्दकरं ब्रह्म जगत्क्लेशविनाशनम् । ब्रह्मविष्ण्विन्द्ररुद्राणामभ्यन्तरमतीन्द्रियम् ॥३॥ शान्तिकृच् छान्तमनसस् तदन्तर्नयने स्थितम् । माहात्म्यात् तपसा विप्राः परमानन्दकारकम् ॥४॥ यस्मादुमापतिः सार्धमुमया तमधिष्ठितः । तं दृष्ट्वा चाष्टमांशेन तस्मात् सोमोऽभवच् शिशुः ॥५॥ अधः सुस्राव नेत्राभ्यां धाम तच् चाम्बुसम्भवम् । दीपयद् विश्वमखिलं ज्योत्स्नया सचराचरम् ॥६॥ तद् दिशो जगृहुर् धाम स्त्रीरूपेण सुतेच्छया । गर्भोभूत्वोदरे तासामास्थितोऽब्दशतत्रयम् ॥७॥ आशास् तं मुमुचुर्गर्भमशक्ता धारणे ततः । समादायाथ तं गर्भमेकीकृत्य चतुर्म्मुखः ॥८॥ युवानमकरोद् ब्रह्मा सर्वायुधधरं नरम् । स्यन्दनेथ सहस्राश्वे वेदशक्तिमये प्रभुः ॥९॥ आरोप्य साकमनयदात्मीयं स पितामहः । तत्र ब्रह्मर्षिभिः प्रोक्तमस्मत्स्वामी भवत्वयम् ॥१०॥ पितृभिर्देवगन्धर्वैरोषधीभिस्तथैव च । तुष्टुवुः सोमदैवत्यैर्ब्राह्माणं मन्त्रसङ्ग्रहैः ॥११॥ स्तूयमानस्य तस्याऽभूदधिको धामसम्भवः । तेजोवितानादभवद् भुवि दिव्यौषधीगणः ॥१२॥ तद्दीप्तिरधिका तस्माद् रात्रौ भवति सर्वदा । तेनौषधीशः सोमोऽभूद् द्विजेशश्चापि गद्यते ॥१३॥ वेदधामरसं चापि यदिदं चन्द्रमण्डलम् । क्षीयते वर्धते चैव शुक्ले कृष्णे च सर्वदा ॥१४॥ विंशतिं च तथा सप्त दक्षः प्राचेतसो ददौ । रूपलावण्यसंयुक्तास्तस्मै कन्याः सुवर्चसः ॥१५॥" इत्यादि छ । त्यो आख्यान सबै वा एक अद्दे सम्म वा उक्त १५ श्लोक सम्म भने पनि पाठ गर्नु उचित देखिञ्च । (सोमोत्पत्त्याख्यान स्कन्दपुराणकै प्रभासखण्डको प्रभासक्षेत्रमाहात्म्यका अठारौं अद्ध्यायमा पनि छ र अरु सबैजसो पुराणहरुमा पनि पाँइञ्च ) ।

३ शैशिरीयशाकलऋग्वेदसंहितामा सोमसूक्तहरु धेरै छन् । माद्ध्यन्दिनीयवाजसनेयि-शुक्लयजुर्वेदसंहितामा भने बारौं अद्ध्यायका अन्तमा "आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्स्य सङ्गथे ॥ ११२॥ सन् ते पयाँसि समु यन्तु वाजाः सवँ वृष्ण्यान्यभिमातिषाहः । आप्यायमानोऽअमृताय सोम दिविश्श्रवाँस्युत्तमानि धिष्व ॥११३॥ आप्यायस्स्व मदिन्तम सोम विश्श्वेभिरँशुभिः । भवा नः सप्प्रथस्तमः सखा वृधे ॥११४॥" यो सोमसूक्त छ । गुरुमुखबाट स्वशाखावेदमन्त्रसंहिता विधिवत् पड़ेका ब्राह्मणले एसैको यथाशक्ति १०८ वा २८ आवृत्ति पाठ गर्नु उचित देखिञ्च । अथवा चौतिसौं अद्ध्यायको "अषाढं युत्सु पृतनासु पप्रिँ स्वर्षामप्सावँ वृजनस्स्य गोपाम् । भरेषुजाँ सुक्षितिँ सुश्रवसं जयन्तन् त्वामनुमदेम सोम ॥२०॥ सोमो धेनुँ सोमोऽअर्व्वन्तमाशुँ सोमो वीरङ् कर्मण्यन् ददाति । सादन्यवँ विदत्थ्यँ सभेयम् पितृश्रवणयँ यो ददाशदस्मै ॥२१॥ त्वमिमा ओषधीः सोम विश्श्वास्त्त्वमपोऽअजनयस्त्त्वङ् गाः । त्वमाततन्थोर्व्वन्तरिक्क्षन्त्वञ् ज्योतिषा वि तमो ववर्थ ॥२२॥ देवेन नो मनसा देव सोम रायो भार्गँ सहसावन्नभियुद्ध्य ।

(अवशिष्ट टिप्पणी आर्को पृष्ठमा छ )

प्रतिमासु क्रमेण सहैव वा चन्द्रं पूजयेत् । अथ-न्यासः । ॐ क्षीरपुत्राय हृदयाय नमः । ॐ विद्महे शिरसे स्वाहा । ॐ अमृतत्वाय शिखायै वषट् । ॐ धीमहि कवचाय हुम् । ॐ तन्नश्चन्द्रः नेत्राय वौषट् । ॐ प्रचोदयात् अस्त्राय फट् । इति षडङ्गन्यासं कुर्यात् । ततः ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्स्यबृहस्पतिर्य्यज्ञमिमन्तनो त्वरिष्टंय्यज्ञँ समिमन्–दधातु । विश्श्वेदेवासऽइह मादयन्तामो३म्प्रतिष्ट्ठ ॥ इति प्रतिमासु चन्द्रस्य प्राणप्रतिष्ठां कृत्वा ॐ चन्द्रमामनसोजातश्च्चक्क्षोः सूर्य्योऽअजायत । श्रोत्राद्द्वायुश्च्चप्प्राणश्च्चमुखा-दग्ग्निरजायत ॥ इति मन्त्रेण चन्द्रकलान्यासं कृत्वा ओम् अत्र चन्द्रस्स्य वाक्पाणि–पादपायूपस्थचक्षुश्श्रोत्रघ्राणरसनत्वङ्मनांसि एकादशेन्द्रियणि च न्यस्यामि इति चन्द्रस्यै–कादशेन्द्रियाणि च न्यस्येत् । ततः ॐ इमन्देवाऽअसपत्त्नँ सुवद्ध्वम्महतेक्क्षत्राय–महतेज्ज्यैष्ट्ठ्यायमहतेजानराज्ज्यायेन्द्रस्स्येन्द्रियाय। इमममुष्ष्यपुत्त्रममुष्ष्यैपुत्त्रमस्स्यैविश ऽएषवोमी राजासोमोस्म्माकम्ब्राह्म्मणानाँ राजा ॥ इति सोममन्त्रमुदीरयेत् । **अथ ध्यानम्** । चन्द्रः कर्कटगः प्रभुः सितनिभश्चात्रेयगोत्रोद्भवश्चाग्नेयश्चतुरस्रवारुणमुखः शम्भोः सदा सेवकः । षट्सप्ताग्निदशैकशोभनफलो ज्ञारी रवीज्ज्यप्रियः स्वामी यामुनदेशजो हिमकरः कुर्यात् सदा मङ्गलम् ॥ इति चन्द्रं ध्यायेत् । अथवा-कुन्दकर्पूरसङ्काशं श्वेतपद्मकरद्वयम् । एकास्यं द्वीक्षणं सौम्यं श्वेतांशुं मणिभूषितम् ॥ सप्तहस्तं विमानस्थं रोहिण्या सहितं स्मितम् । सशक्तिं सायुधं ध्यायेत्कलाषोडशभिर् युतम् ॥ इति चन्द्रं ध्यायेत् । **तत आवाहनम्** । सचन्दनाक्षतपुष्पकरेण प्रतिमाः स्पृष्ट्वा—आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वर । अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम्[1] ॥ इत्यावाहयेत् । **अथ स्थापनम्** । प्रतिमाः स्पृष्ट्वा—तवेयं हि महामूर्तिस्तस्यां त्वां सर्वग प्रभो । भक्तिस्नेहसमाकृष्टं दीपवत् स्थापयाम्यहम् ॥ इति स्थापयेत् । **तत आसनम्** । सर्वान्तर्यामिणे देव सर्वबीजमयं शुभम् । स्वात्मस्थाय परं शुद्धमासनं कल्पयाम्यहम् । अस्मिन्वरासने देव सुखासीनोक्षरात्मकः । प्रतिष्ठितो भवेश त्वं प्रसीद परमेश्वर ॥ इति आसनं पुष्पादिरूपं दद्यात् । **अथ स्वागतम्** । यस्य दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये । तस्मै ते परमेशाय स्वागतं स्वागतं च मे ॥ इति स्वागतं कुर्यात् । **अथ सुस्वागतम्** । कृतार्थोऽनुगृहीतोस्मि सफलं जीवितं मम । आगतो देवदेवेशः सुस्वागतमिदं पुनः ॥ इति सुस्वागतं कुर्यात् । **ततः पाद्यम्**[2] । यद्भक्तिलेशसम्पर्कात् परमानन्दसंभवः । तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये ॥ इति पाद्यं जलं दद्यात् ।

---

मा त्त्वा तनदीशिषे वीर्य्यस्स्योभयेब्भ्यः प्प्रचिकित्त्सा गविष्टौ ॥२३॥" यो सोमसूक्तको पाठ गरे पनि हुनि देखिञ्च । तनुङ्का परम्परामा कसैले चन्द्रसूक्त भनि "तदेवाग्ग्निस्त्तदा-दित्त्यस्त्तद्वायुस्त्तदु चन्द्रमाः" इत्त्यादि माद्ध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदमन्त्रा–र्षसंहिताका बत्तिसौँ अद्ध्यायका १६ कण्डिकाको प्रयोग गर्नि गरेको पनि बुजिञ्च ।

१. इ आवाहनादिमन्त्रहरु धेरैजसो नारदीयपुराणका सतसट्ठियौँ अद्दमा पाँइञ्चन् ।

२. पाद्यादि समर्पणगर्न माध्यन्दिनीयवाजसनेयिशाखामा नभएका ऋग्वेदादिका त्वं सोम ऋतुभिः इत्यादिमन्त्रकोप्रयोगदेखाउनि पनि पद्धति बजारमा देखिञ्च, किन्तु तेसो गर्नि कुरा माद्ध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेदाध्यायिहरुका लागि ग्राह्य देखिँदैन । साथै वैदिकब्राह्मणहरुकालागि तान्त्रिक रुद्रयामलान्तर्गत चतुराशीतिपूजापद्धतिभन्दा स्कन्दपुराणानुसारि सामान्य पौराणिक पद्धति नै बर्ता ग्राह्य देखिञ्च । कतिपयगृह्यसूत्रहरुमा पनि पाँइनि षष्ट्यब्दपूर्त्यादिनिमित्त-कोग्ग्ररथशान्तिभीमरथारोहणादिकर्मको परिग्ग्राह्यतरता बुज्नु भन् बर्ता अपेक्षित देखिञ्च ।



ततोऽर्घ्यम् । तापत्रयहरं दिव्यं परमानन्दलक्षणम् । तापत्रयविनिर्मुक्त्यै तवार्घ्यं कल्पयाम्यहम् ॥ इति अर्घ्यं दद्यात् । **तत आचमनीयम्** । वेदानामपि वेदाय देवानां देवतात्मने । कल्पयामि वरं शुद्धं तोयं ते शुद्धिहेतवे ॥ इति आचमनीयं तोयं दद्यात् । ततो मधुपर्कः । सर्वकालुष्यहीनाय परिपूर्णसुखात्मने । मधुपर्कमिमं देव कल्पयामि प्रसीद मे ॥ इति दधिमधुघृतं दद्यात् । ततः **पुनराचमनीयम्** । उच्छिष्टोऽप्यशुचिर् वापि यस्य स्मरणमात्रतः । शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम् ॥ इति पुनराचमनीयं तोयं प्रदद्यात् । **अथ पञ्चामृतस्नानम्** । तत्रादौ **पयसा** । देवाद्यैर्निर्मिता धेनुः सर्वपापप्रणाशिनी । तत्क्षीरस्नापितो देव नित्यं मे वरदो भव ॥ इति पयसा स्नपयेत् । ततो दध्ना । कामतोऽकामतो वाऽपि यन् मया दुष्कृतं कृतम् । तत् सर्वं विलयं यातु दधिस्नानेन कामद ॥ इति दध्ना स्नपयेत् । ततो **घृतेन** । रसानामुत्तमं त्वाज्यं देवानां च सदा प्रियम् । तेन त्वं स्नापितो देव निधिकान्तिप्रदो भव ॥ इति घृतेन स्नपयेत् । ततो मधुना । यस्य स्मरणमात्रेण तृप्तिं यान्ति पितामहाः । मधुना स्नापितो देव नित्यं शोकहरो भव ॥ इति मधुना स्नपयेत् । ततः **शर्करया** । यमलोकभयात् त्रस्तः शरणं त्वां गतः प्रभो । खण्डस्नानेन देवेश मां कुरुष्व सुखान्वितम् । अथ **शुद्धोदकेन** । परमानन्दबोधाब्धिनिमग्ननिजमूर्तये । साङ्गोपाङ्गमिदं स्नानं कल्पयाम्यहमीश ते ॥ इति शुद्धोदकेन स्नपयेत् । **ततो वस्त्रम्** । मायाचित्त्रपटच्छन्ननिज गुह्योरुतेजसे । निरावरणविज्ञान वासस्ते कल्पयाम्यहम् ॥ यमाश्रित्य महामाया जगत्सम्मोहिनी सदा । तस्मै ते परमेशाय कल्पयाम्युत्तरीयकम् ॥ इति वस्त्रयुगलं दद्यात् । ततो **यज्ञोपवीतम्** । यस्य शक्तित्रयेणैव सम्प्रीतमखिलं जगत् । यज्ञसूत्त्राय तस्मै ते यज्ञसूत्रं प्रकल्पये ॥ इति यज्ञोपवीतं दद्यात् । तत **आभूषणानि** । स्वाभावसुन्दराङ्गाय नानाशक्त्याश्रयाय च । भूषणानि विचित्राणि कल्पयाम्यमरार्चित ॥ इति आभूषणानि समर्पयेत् । **ततश्चन्दनम्** । परमानन्दसौरभ्यपरिपूर्णदिगन्तरम् । गृहाण परमं गन्धं कृपया परमेश्वर ॥ इति चन्दनं (गन्धं) समर्पयेत् । **ततः पुष्पम्** । तुरीयवनसम्भूतं नानागुणमनोहरम् । अमन्दसौरभं पुष्पं गृहाणेदमुत्तमम् ॥ इति पुष्पं समर्पयेत् । (**ततः अक्षताः** । अक्षतान् धवलान् देव गृहाण वरदर्षभ । देवदेवोत्तमस्त्वं हि ह्यक्षयं कुरु मे फलम् ॥ इति अक्षतान् समर्पयेत्) । **ततो धूपः** । वनस्पतिरसोद्भूतो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ इति धूपं समर्पयेत् । **ततो दीपः** । सुप्रकाशो महान् दीपः सर्वत - स्तिमिरापह । सबाह्याभ्यन्तरज्योतिर् दीपोयं प्रतिगृह्यताम् ॥ इति दीपं समर्पयेत् । **ततो नैवेद्यम्** । सत्पात्रसिद्धसुहविर्विविधानेकभक्षणम् । निवेदयामि देवेश सानुगाय गृहाण तत् ॥ इति नैवेद्यं समर्पयेत् । **तत आचमनीयम्** । गङ्गा च यमुना चैव नर्मदा च सरस्वती । ताभ्यो जलं मयाऽऽनीतं पुनराचमनीयकम् ॥ इति पुनराचमनीयं जलं दद्यात् । **अथ ताम्बूलम्** । पूगीफलं सताम्बूलं खदिरादिमनोहरम् । कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ इति ताम्बूलं समर्पयेत् । **ततः फलम्** । इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर् भवेज्जन्मनिजन्मनि ॥ इति फलं समर्पयेत् । **ततः सुगन्धद्रव्यम्** । संसारार्णवमग्नं च पाहि मां रोहिणीपते । सुगन्धञ्च सुरश्रेष्ठ गृहाण परमेश्वर । इति सुगन्धद्रव्यं समर्पयेत् । **अथ हिरण्यम्** । हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ इति हिरण्यं समर्पयेत् । **अथ गणितद्रव्यम्** वर्ति-पुष्पा-ऽक्षतादि सहस्रसंख्यादिकं गणितं द्रव्यमस्ति चेत्

सङ्कल्पपूर्वकं तत् समर्पयेत् । **ततो नीराजनम्** । त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमम् । आत्मज्योतिः परं धाम दीपोऽयं प्रतिगृह्यताम् ॥ इति नीराजयेत् । **ततो दर्पणः** । दर्शनिन त्वमादर्श नूनं मङ्गलदायकः । शौर्यसौभाग्यसत्कीर्तिनिर्मलज्ञानदो भव ॥ इति दर्पणं समर्पयेत् । **ततश् चामरम्** । शशाङ्ककरसङ्काश हिमडिण्डिरपाण्डुर। प्रोत्सारयाशु दुरितं चामरामरवल्लभ ॥ इति चामरं समर्पयेत् । **अथ प्रदक्षिणा** । यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्तु प्रदक्षिणपदेपदे ॥ इति प्रदक्षिणां कुर्यात् । **ततो नमस्कारः** । नमः शुभ्रांशवे तुभ्यं द्विजराजाय ते नमः । रोहिणीपतये तुभ्यं लक्ष्मीभ्रात्रे नमोस्तुते ॥ इति नमस्कारं कुर्यात् । अथनामपूजा । १.ॐ हिमांशवे नमः । २.ॐ चन्द्रमसे नमः ।३.ॐ सोमाय नमः । ४.ॐ विधवे नमः । ५.ॐ कुमुदबन्धवे नमः । ६.ॐ सुधांशवे नमः । ७.ॐ ओषधीशाय नमः । ८.ॐ अब्जाय नमः । ९.ॐ मृगाङ्काय नमः । १०.ॐ कलानिधये नमः । ११.ॐ नक्षत्रेशाय नमः । १२.ॐ निशापतये नमः । १३.ॐ जैवातृकाय नमः । १४.ॐ द्विजराजाय नमः । १५.ॐ शुभ्रांशवे नमः । १६.ॐ क्षपाकराय नमः[1] ॥ इति नाममन्त्रैः पुष्पाणि अर्पयेत् । **अथ स्तुतिः** । हिमांशवे नमश्चैव सोमचन्द्राय वै नमः । चन्द्राय विधवे नित्यं नमः कुमुदबन्धवे ॥ सुधांशवे च सोमाय ओषधीशाय वै नमः । नमोब्जाय मृगाङ्काय कलानां निधये नमः ॥ नमो नक्षत्रनाथाय शर्वरीपतये नमः । जैवातृकाय सततं द्विजराजाय वै नमः ॥ इति स्तुतिङ् कुर्यात् । **अथ शङ्खार्घ्यम्** । नमस्ते मासमासान्ते जायमान पुनःपुनः । गृहाणार्घ्यं शशाङ्क त्वं रोहिण्या सहितो मम ॥ इति शङ्खतोयं सपुष्पफलचन्दनं शशाङ्काय दद्यात् । **अथ क्षमापनम्** । न्यूनातिरिक्तकर्माणि मया यानि कृतानि च । क्षमस्व तानि सर्वाणि ताराधिप नमोस्तु ते ॥ मन्त्रहीनं क्रियाहीनं विधिहीनं सुरेश्वर । यत् पूजितं मया देव परिपूर्णं तदस्तु मे ॥ इति क्षमापनं कुर्यात् । **अथ होमः** । ततो यदि होमं कर्तुं स्वसूत्रोक्तपद्धत्या अग्निस्थापनं कृतमस्ति तर्हि सङ्कल्पपूर्वकम् आघाराज्यभागौ हुत्वा मधुसर्पिर्भ्यामक्ताभिः पलाशसमिद्भिः अष्टोत्तरसहस्रसङ्ख्याभिरष्टोत्तरशत-सङ्ख्याभि-रष्टाविंशतिसङ्ख्याभिर्वाआहुतिसङ्ख्यासमसङ्ख्याभिः सुसमिद्धे अग्नौ अष्टोत्तरसहस्र-सङ्ख्या अष्टोत्तरशतसङ्ख्या अष्टाविंशतिसङ्ख्या वा पायसाहुतीराज्याहुतीर् वा इमन्देवा इत्यादिना मन्त्रेण जुहुयात् । ततो यथायथं स्विष्टकृदादिकाः स्विष्टकृदन्ता वा महाव्याहृत्यादिहोमाः कार्याः । **अथ षोडशानां कलशानां दानम्** । ततोत्रावसरे पूजितान् षोडश कलशान् सति सम्भवेन्यांश्च षोडश दुग्धपूर्णान् सरत्नकान् सवस्त्राच्छादनान् कलशान् शान्त्यर्थं ब्राह्मणाय दातुं सङ्कल्पं कृत्वा पश्चाद् दद्यात् । ततो ब्राह्मणो दुग्धेन जलेन च यजमानमभिषिञ्चेत् । ततोऽत्र सकुटुम्बब्राह्मण-भोजनसङ्कल्पं कृत्वा पश्चाद् भोजयेत् । सति सम्भवे ब्राह्मणदम्पती प्रयत्नेनवस्त्रादिभिः पूजयेत् । ततो ब्राह्मणाय धेनुं दद्यात् । गोदानविधिना नमो गोभ्य इत्यादिना गां सम्पूज्य आकृष्णेनेत्यादिना देयब्राह्मणं च सम्पूज्य मनोमेतर्प्पयतेत्यादिना गोपुच्छेन कर्मपात्रोदकं

१. इ सोर नामहरुमा पछिल्ला दुइ नाम ऐलेको स्कन्दपुराणको पाठसित मिल्दैनन्, तथापि परम्परागत पद्धतिमा इनै नाम उल्लिखित पाँइञ्चन् । स्कन्दपुराणको वचनमा पाठभेद रहेकाले एसो भएको हो कि कसो हो पौराणिकहरुले विचारगर्नु उचित देखिञ्च ।



स्वशिरसि अभिषिच्य तर्पणीय-पितृदेवताः सन्तर्प्य सकुशोदकगोपुच्छमादाय सङ्कल्पं कुर्यात् । हरिःॐ तत्सत्३ विष्णुः३ इत्यादि देशकालौ संकीर्त्य अद्यामुकगोत्रस्यामुक -प्रवरस्यामुकशास्वाध्यायिनोमुकशर्मणो ममात्मनः श्रीचन्द्रप्रसादात् श्रुतिस्मृतिपुराणोक्तफल प्राप्त्यर्थम् एतज्जन्मपूर्वजन्मकृतकायिक-वाचिक-मानसिक-सांसर्गिक-गार्भिक-बैजिक-ज्ञाताज्ञाता-स्पृश्यस्पर्शना-भोज्यभोजना-गम्यागमनादि-ब्रह्महत्यान्त-सकल-निन्द्यकर्म-दोषोपशान्त्यर्थं देहान्ते चन्द्रलोकप्राप्त्यर्थं च चन्द्रसहस्रदर्शनव्रतोद्यापनरूपेण षोडशसु प्रतिमासु कृतस्य चन्द्रपूजनस्य तस्य यथायथं पूर्वाङ्गत्वेनोत्तराङ्गत्वेन च कृतेन दीपकलशगणेशपूजनेन रक्षाबन्धनपूजनेन ब्राह्मणवरणपूर्वकेण पुण्याहवाचनेन चन्द्रहरि -पूजनेन, ब्राह्मणद्वारा विहितेन सोमोत्पत्त्याख्यानपाठेन सोमसूक्तपाठेन षोडशकलशदानेन सकुटुम्बब्राह्मणभोजनेन (यथासम्भवं कृतेन मातृकापूजनेन, आभ्युदयिकश्राद्धेन, द्विजदम्पतिपूजनेन) च सहितस्य साङ्गतायाः सिद्धये इमां धेनुं रुद्रदैवतां तन्निष्क्रयद्रव्यं वा यथादैवतम् अमुकगोत्रायामुकशर्मणे सुपूजिताय ब्राह्मणाय दातुमहमुत्सृजे तत् सन् न मम । इति । ततः कपिले सर्वदेवानामित्यादिना गोप्रार्थनां कृत्वा दानप्रतिष्ठाद्रव्यं च दद्यात् । ततो ब्राह्मणः स्वस्तीति गोदानं स्वीकृत्य कोदादित्यादिकां कामस्तुतिं पठेत् । ततो यजमानः प्रतिमादानसङ्कल्पं कुर्यात्, पश्चाद् दद्याच् च । ततः चन्द्रसुप्रीतये सुवर्णरजतवस्त्रादिसहितम् अन्नपूर्णपात्रं ब्राह्मणाय दद्यात् ।

ततः उपवासविधानेन दिनशेषं नीत्वा श्वोभूते कर्तव्यमपि भगवतो नारायणरूपस्य चन्द्रहरेः पूजनं तथा कर्तुमशक्तौ तत्कालमेव मध्यस्थकलशे पूर्ववत् कुर्यात् । ततो भूयसीर् दक्षिणा दातुं सङ्कल्पं कृत्वा पश्चाद् दद्यात् । ततः यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ कायेन वाचा मनसेन्द्रियैर् वा बुद्ध्यात्मना वा प्रकृतेः स्वभावात् । करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पये तत् । न्यूनातिरिक्तानि परिस्फुटानि यानीह कर्माणि मया कृतानि । क्षम्याणि चैतानि मम क्षमस्व प्रयाहि तुष्टः पुनरागमाय ॥ इति पठेत् । ततोऽक्षतान् विकिरन्- गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ सुरेश्वर ॥ यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् । इष्टकामप्रसिध्यर्थं पुनरागमनाय च ॥ इति पठित्वा देवान् विसर्जयेत् । कलशान् प्रतिमाश्च ब्राह्मणाय प्रतिपादयेत् ।

ततो ब्रह्मणो यजमानस्याभिषेकं रक्षाबन्धनं च कुर्यात् । ततो यजमानः ब्राह्मणादीन् तिलकादिभिः सम्पूज्य तेभ्यो भूयसीं दक्षिणां क्रमेण दद्यात् ।

ततो यजमानः पञ्चामृतं नैवेद्यादिकञ्च ब्राह्मणेभ्यो बान्धवेभ्यश्च दद्यात्, ब्राह्मणानुज्ञां गृहीत्वा अन्यहस्तादुपलभ्य स्वयञ्च भुञ्जीत । ततः सकुटुम्बब्राह्मणादीन् मिष्टान्नैर् भोजयेत् । सबान्धवः स्वयं च भुञ्जीत ॥

**॥ इति संक्षेपचतुरशीतिपूजा कविराजनरनाथशर्मणा परिष्कृता ॥**

## अथ स्कन्दपुराणस्थं
## चन्द्रसहस्रव्रतोद्यापनविधिवर्णनम्

अगस्त्य उवाच ॥..॥४॥.. ज्येष्ठे मासि सिते पक्षे पञ्चदश्यां विशेषतः । तस्य सावँवत्सरी यात्रा देवैश चन्द्रहरेः स्मृता ॥४१॥ तस्मिन्नुद्यापनं चन्द्रसहस्रं व्रतयोगिभिः । कार्यं प्रयत्नतो विप्र सर्वयज्ञफलाधिकम् ॥४२॥ तस्मिन् कृते महापापक्षयात् स्वर्गो भवेन् नृणाम् ॥४३॥ श्रीव्यास उवाच ॥ भगवन् ब्रूहि तत्त्वेन तस्य चन्द्रहरेः शुभाम् । उत्पत्तिं च तथा चन्द्रव्रतस्योद्यापने विधिम् ॥४४॥ अगस्त्य उवाच ॥ अयोध्यानिलयं विष्णुं

नत्वा शीतांशुरुत्सुक :। आगच्छत् तीर्थमाहात्म्यं साक्षात्कर्तुं सुधानिधिः। अत्रागत्य च चन्द्रोऽथ तीर्थयात्रां चकार सः ॥४५॥ क्रमेण विधिपूर्वं च नानाश्चर्यसमन्वितः। समाराध्य ततो विष्णु तपसा दुश्चरेण वै ॥४६॥ तत्प्रसाद समासाद्य स्वाभिधानपुरस्सरम्। हरिं संस्थापयामास तेन चन्द्रहरिः स्मृतः ॥४७॥ वासुदेवप्रसादेन तत् स्थानं जातमद्भुतम्। तद् धि गुह्यतमं स्थानवैं वासुदेवस्य सुव्रत ॥४८॥ सर्वेषामेव भूतानां भर्तुर्मोक्षस्य सर्वदा। अस्मिन् सिद्धाः सदा विप्र गोविन्दव्रतमास्थिताः ॥४९॥ नानालिङ्गधरा नित्यवैं विष्णुलोकाभिकाङ्क्षिणः। अभ्यस्यन्ति परं योगं मुक्तात्मानो जितेन्द्रियाः ॥५०॥ यथा धर्ममवाप्नोति अन्यत्र न तथा क्वचित्। दानं व्रतं तथा होमः सर्वमक्षयतां व्रजेत् ॥५१॥ सर्वकामफलप्राप्तिर् जायते प्राणिनां सदा। तस्मादत्र विधातव्यं प्राणिभिर् यत्नतः क्रमात्। दानादिकवैं विप्रपूजा दम्पत्योश्च विशेषतः ॥५२॥ सर्वयज्ञाधिकफलं सर्वतीर्थावगाहनम्। सर्वदेवावलोकस्य यत् पुण्यं जायते नृणाम् ॥५३॥ तत् सर्वं जायते पुण्यं प्राणिनामस्य दर्शनात्। तस्मादेतन् महाक्षेत्रं पुराणादिषु गीयते ॥५४॥ उद्यापनविधिश्चात्र नृभिर् द्विजपुरस्सरम्। अग्रे चन्द्रहरेश् चन्द्रसहस्रव्रतसंज्ञकः ॥५५॥ गते वर्षद्वये सार्धे पञ्चपक्षे दिनद्वये। दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः ॥५६॥ त्र्यधिके वा अशीत्यब्दे चतुर्मासयुते ततः। भवेच् चन्द्रसहस्रन्तु तावज् जीवति यो नरः। उद्यापनं प्रकर्तव्यं तेन यात्राप्रयत्नतः ॥५७॥ यत् पुण्यं परमं प्रोक्तं सततं यज्ञयाजिनाम्। सत्यवादिषु यत् पुण्यं यत् पुण्यं हेमदायिनि। तत् पुण्यं लभ्यते विप्र सहस्राब्जस्य जीविभिः[1] ॥५८॥ सर्वसौख्यप्रदं तादृक् पुण्यव्रतमिहोच्यते ॥५९॥ चतुर्दश्यां शुचिः स्नात्वा दन्तधावनपूर्वकम्। चरितब्रह्मचर्यश्च जितवाक्कायमानसः। पौर्णमास्यां तथा कृत्वा चन्द्रपूजां च कारयेत् ॥६०॥ पूर्वं च मातरः पूज्या गौर्यादिकक्रमेण च। ऋत्विजः पूजयेद् भक्त्या वृद्धिश्राद्धपुरस्सरम् ॥६१॥ प्रयतैः प्रतिमा कार्या चन्द्रमण्डलसन्निभाः। सहस्रसङ्ख्या ह्यथवा तदर्धं वा तदर्धकम्। निजवित्तानुमानेन तदर्धेन तदर्धिकम् ॥६२॥ ततः श्रद्धानुमानाद् वा कार्या वित्तानुमानतः। अथवा षोडश शुभा विधातव्याः प्रयत्नतः ॥६३॥ माषैः षोडशभिः कार्या प्रत्येकं प्रतिमा शुभा ॥६४॥ सोममन्त्रेण चन्द्रपूजां ततः कुर्यादागमोक्तविधानतः। होमस्तु कार्यो वित्तानुमानतः। प्रतिमास्थापनं कुर्यात् सोममन्त्रमुदीरयेत् ॥६५॥ सोमोत्पत्तिं सोमसूक्तं पाठयेच् च प्रयत्नतः। चन्द्रपूजां ततः कुर्यादागमोक्तविधानतः ॥६६॥ चन्द्रन्यासं कलान्यासं कारयेन् मण्डले जलम्। एकादशेन्द्रियन्यासं तथैव विधिपूर्वकम् ॥६७॥ चन्द्रबिम्बनिभं कार्यं मण्डलं शुभतण्डुलैः। मध्ये च कलशः स्थाप्यो गव्येन पयसाऽऽप्लुतः ॥६८॥ चतुरस्रेषु सम्पूर्णान् कलशान् स्थापयेद् बहिः। मण्डले चन्द्रपूजा च कर्तव्या नामभिः क्रमात् ॥६९॥ हिमांशवे नमश्चैव सोमचन्द्राय वै नमः। चन्द्राय विधवे नित्यं नमः कुमुदबन्धवे ॥७०॥ सुधांशवे च सोमाय ओषधीशाय वै नमः। नमोऽब्जाय मृगाङ्काय कलानां निधये नमः ॥७१॥ नमो नक्षत्रनाथाय शर्वरीपतये नमः। जैवातृकाय सततं द्विजराजाय वै नमः ॥७२॥ एवं षोडशभिश् चन्द्रः स्तोतव्यो नामभिः क्रमात् ॥७३॥ ततो वै प्रयतो दद्याद् विधिवन् मन्त्रपूर्वकम्। शङ्खतोयं समादाय सपुष्पफलचन्दनम् ॥७४॥ नमस्ते मासमासान्ते जायमानः पुनःपुनः। गृहाणाऽर्घ्यं शशाङ्क त्वं रोहिण्या सहितो मम ॥७५॥ एवं सम्पूज्य विधिवच् छशिनं प्रणतो भवेत्। षोडशाऽन्ये च कलशा दुग्धपूर्णाः सरत्नकाः ॥७६॥ सवस्त्राच्छादनाः शान्त्यै दातव्यास्ते द्विजन्मने। अभिषेकं ततः कुर्यात् पायसेन जलेन तु ॥७७॥ ऋत्विजां मनसस्तुष्टिः कार्या वित्तानुमानतः। ब्राह्मणं भोजयेत् तत्र सकुटुम्बं विशेषतः ॥७८॥ पूजनीयौ प्रयत्नेन वस्त्रैश्च द्विजदम्पती। कर्तव्यं च ततो भूरिदक्षिणादानमुत्तमम् ॥७९॥ प्रतिमाश्च प्रदातव्या द्विजेभ्यो धेनुपूर्विकाः। सुवर्णं रजतं वस्त्रं तथान्नं च विशेषतः। दातव्यं चन्द्रसुप्रीत्यै हर्षादिवं द्विजन्मने ॥८०॥ उपवासविधानेन दिनशेषं नयेत् सुधीः। अनन्तरे च दिवसे कुर्याद् भगवदर्चनम् ॥ बान्धवैः सह भुञ्जीत नियमं च विसर्जयेत् ॥८१॥ एवं च कुरुते चन्द्रसहस्रं व्रतमुत्तमम्। ब्रह्मघ्नोऽपि सुरापोऽपि स्तेयी च गुरुतल्पगः। व्रतेनाऽनेन शुद्धात्मा चन्द्रलोकं व्रजेन् नरः ॥८२॥ तादृशश्[2] च भवेद् विप्र प्रियो नारायणस्य च। एवं करोति नियतं कृतकृत्यो भवेन् नरः ॥८३॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डेऽयोध्यामाहात्म्ये चन्द्रसहस्रव्रतोद्यापनविधिवर्णनं नाम तृतीयोऽध्यायः ॥

---

१. "तत् पुण्यं लभते विप्र सहस्राब्दस्य जीविभिः" इति मुद्रितः पाठो दृश्यते, तथापि पुराणेऽर्थस्य प्राधान्यात् लेखकप्रमादस्य सम्भावितत्वाच्चेदं पाठसंशोधनमस्माभिरुचितं मत्त्वा कृतं बोध्यम्।

२. "यादृशश्च भवेद्" इति मुद्रितः पाठः, किन्तु सोऽर्थदृष्ट्या दुरुपपादः।



९

# मुक्तिक्षेत्र-तीर्थयात्रा : सङ्क्षिप्त चर्चा

— शिवराज आचार्य कौण्डिन्न्यायन

(तनुङ-चुँदि-तामाकोट-बिसि, बग्ग्रेखोला)

नेपालका भारतवर्षभर प्रसिद्ध तीर्थहरु-मद्दे मुक्तिक्षेत्र पनि एक हो। एस लेखकले आँफ्नु मुक्तिक्षेत्र-तीर्थयात्राका बेला भारतको मद्ध्यप्रदेशको हौसङ्गाबादबड, वृन्दावनबड, र कल्कत्ताबड आका मुक्तिक्षेत्र-तीर्थ-यात्त्रिहरुलाइ बाटामा भेट्याथ्यो। साथै केरलका कतिपय व्यक्तिले मुक्तिक्षेत्रतीर्थयात्राका लागि अत्यन्त लालायित भै कुरा गरेको पनि एस लेखके आँफ्नु केरलयात्त्राका अवसरमा सुन्याथ्यो।

ऐलेको नेपालको प्राशासनिक विभागअन्सार् मुक्तिक्षेत्र धौलागिरि अञ्चलको मुस्ताङ जिल्लामा पर्च। किन्तु प्राकृतिक र धार्मिक क्षेत्र-विभाजन-अनुसार् मुक्तिक्षेत्र गण्डकीक्षेत्त्रमा वा पारकोटक्षेत्त्रमा (कृष्णादेखि त्रिशूलगङ्गा सम्मको क्षेत्त्रमा) पर्च।

एस लेखकलाइ मुक्तिक्षेत्त्रतीर्थयात्त्रा गर्नि अवसर भर्खरै मत्रै मिल्यो। एस तीर्थयात्त्राका अनुभवका समेत आधारमा मुक्तिक्षेत्त्रतीर्थयात्त्राका विषयमा यो सङ्क्षिप्त चर्चा प्रकाशित गर्दा अरु मुक्तिक्षेत्रतीर्थयात्त्रार्थिलाइ पनि केइ् लाभ होला कि भनेर यो प्रकाशित गरिँदैछ।

मुक्तिक्षेत्त्रको विशेष चर्चा गर्नुभन्दा अगि तीर्थयात्त्रासम्बन्धि केइ सामान्य कुरा लेख्नु जाति नै होला। तीर्थ दुइ प्रकारका मानिया छन्। ति मानस र भौम हुन्। सत्य, क्षमा, इन्द्रियनिग्ग्रह, सर्वभूतदया, आर्जव, ज्ञान, धृति, तप, र चित्तशुद्धि मानस तीर्थ मानिया छन्। अद्भुत प्रभाव भएको भूमि, अद्भुत शक्ति भएको जल, र मुनिहरुको निवास भएको स्थानविशेष नै भौम तीर्थ मानिया देखिञ्च। मानस र भौम दुऔथरि तीर्थमा न्वाउनु अब्भ्युदयकारि मानिञ्च।

उपाकुर्वाण ब्रह्मचारिका लागि गुरु नै तीर्थ हो। अग्नि-वेदसमन्वित गृहस्थका लागि गृह नै तीर्थ हो। आश्रमान्तरालस्थहरु, विधुरहरु र वानप्प्रस्थहरु तीर्थयात्त्राका मुक्ख्य अधिकारि देखिञ्चन्। प्रायश्चित्तार्थक तीर्थयात्त्रामा सबै आश्श्रमका व्यक्ति अधिकारि हुञ्चन्। साग्निक गृहस्थले तीर्थयात्त्रा गरेमा अग्नि र पत्नी साथमा लिएर यात्त्रा गर्न पर्नि देखिञ्च। प्रायश्चित्तार्थक तीर्थयात्त्रा भने पत्नी साथमा नलिइकन पनि गर्नहुञ्च।

ठुला तीर्थका यात्त्रामा अँगाल्न पर्नि विधि त्रिस्थलीसेतु, वीरमित्त्रोदय-तीर्थप्रकाश, निर्णयसिन्धु-श्राद्धप्रकरणान्तभाग इत्त्यादि ग्रन्थमा लम्बेचौडे रूपमा प्रतिपादित छ। सामान्यतया तीर्थयात्त्रा काम्म्य कर्म भएकाले सम्पूर्ण-अङ्गसहित नै यथाविधि सम्पन्न गर्न पर्नि देखिञ्च। तथापि लोकमा प्राय अङ्गिको मत्त्रै अनुष्ठान गर्नि चलन चलेको छ। एस विषयमा धार्मिक विद्द्वान्हरुले विचार र चर्चा चलाउनु उचित देखिञ्च।

अरु कामले यात्रा गर्दा बिचमा तीर्थ परेर तीर्थस्नानादि गर्दा तीर्थयात्राको आदा फल पाइनि; हिंग्न सक्निले यानमा चडेर तीर्थयात्रा गरेमा आदा फल नष्ट हुनि; छाता ओड्नि, जुत्ता लाउनि गरेर तीर्थयात्रा गरेमा चौथाइ फल नष्ट हुनि; तीर्थयात्राका वेलामा बेपार गरेमा तिनचौथाइ फल नष्ट हुनि, प्रतिग्रह गरेमा (दान लिएमा) सबै फल नष्ट हुनि भन्नि कुरा उक्त धर्मशास्त्रनिबन्धहरुमा प्रतिपादित छ । आर्काको हुँदो तीर्थयात्रा गरिदिनि व्यक्तिले तीर्थयात्राको सोरभागको एक भाग फल पाँउनि र आँफ्ना द्रव्व्यले र यानले अरुलाइ तीर्थयात्रा गराउनि व्यक्तिले तीर्थयात्राको चौबर फल पाँउनि कुरा पनि उक्त ग्रन्थहरुमा उल्लिखित छ ।

तीर्थयात्रासम्बन्धि एति सामान्य कुरा गरि अब मुक्तिक्षेत्रको विशेष चर्चा गरिञ्च । वराहपुराणका एकसेचवालिसौँ अद्देमा दिय्येको मुक्तिक्षेत्रको परिचय तेति प्रष्ट छैन । हिमवत्-खण्डका छपन्नौँअद्देका मनाइबड भने ऐले जाँ मुक्तिनाथको मन्दिर छ, नीलगिरि (मुक्तिपर्वत) हिमालको पश्चिमोत्तर काखमा रएको समथरिलो भिरालो तेइ स्थल नै मुक्ख्य मुक्तिक्षेत्र हो भन्नि बुजिञ्च ।

मुक्तिक्षेत्रको माहात्म्य देखाउँदा वराहपुराणका एकसेचवालिसौँ अद्देमा "यो मुक्तिक्षेत्र दर्शनमात्रले मुक्ति दिनिवाला छ" (मुक्तिक्षेत्रमिदन् देव दर्शनादेव मुक्तिदम्) भनिया छ । हिमवत्खण्डका छपन्नौँ अद्देमा र काशीरामकृत गण्डकीक्षेत्र-माहात्म्यका दोस्रा अद्देमा साठियौँ एकसठियौँ श्लोकमा पनि मुक्तक्षेत्रको माहात्म्य एस्तै देखाय्या छ ।

वराहपुराणमा मुक्तिक्षेत्रका प्रमुख तीर्थहरुमा बाणगङ्गाको (१४४/७१) र शालग्राम भन्नि गामको (१४४/३५) उल्लेख छ । हिमवत्खण्डमा ब्रह्मकुण्ड रुद्रकुण्ड र अनन्तह्रदको उल्लेख पाँइञ्च (५६/२३-२५) । तर ऐले इ तीर्थहरुको स्थलगत परिचय पाँइदैन । हिमवत्खण्डमा मुक्तिक्षेत्रका नदीसङ्गमतीर्थहरुको पनि उल्लेख छ (५६/२१-२२) ।

मुक्तिक्षेत्रका मुक्ख्य देवताका विषयमा वराहपुराणमा केइ उल्लेख पाँइदैन । शिवपुराण-कोटिरुद्रसंहिताका एगारौँ अद्देमा "नयपालाक्ख्यपुर्यान् तु प्रसिद्धायाम् महीतले । लिङ्गं पशुपतीशाख्यं सर्वकामफलप्रदम् ।........ तदारान् मुक्तिनाथाक्ख्यं शिवलिङ्गम् महाद्भुतम् । दर्शनादर्चनात् तस्स्य मुक्तिर् मुक्तिश् च लभ्यते" भन्नि उल्लेख पाँइनि हुँदा मुक्तिक्षेत्रका प्रधानदेवता मुक्तिनाथ महादेव रचन् कि भन्नि कुरा झल्कन आउँच । स्कन्दपुराणान्तर्गत मनिएको हिमवत्खण्ड—अन्सार् (५६/११-१२) अग्निरूप रुद्र, जलरूप विष्णु र होताका रूपमा तिनका सन्निधिमा रएका अज (ब्रह्माजि) इ तिन नै मुक्तिक्षेत्रका प्रधान देवता देखिञ्चन् । काशीरामकृत गण्डकीमाहात्म्यबड (२/७८) पनि तेइ कुरा बुजिञ्च ।

हाम्रो मुक्तिक्षेत्र-तीर्थयात्राका प्रसङ्गमा हामिलाइ भने मुक्तिक्षेत्रमा मुक्तिनाथको मन्दिर, पातालगङ्गा, ज्वालादेवी र शिवपार्वती-मन्दिर एति देवस्थलको सूचना मुक्तिनाथका पूजकबड प्राप्त भयो । नर्सिङ्गुम्बा भन्नि बौद्ध गुम्बा पनि मुक्तिनाथका नजिकै भाको कुरा पनि उक्त पूजकबड थापाय्यो । मुक्तिनाथका मन्दिरमा



स्थापित माझाका विष्णुको, अगल-बगलका भूदेवीको र श्रीदेवीको, तथा गरुडको मूर्ति पुराना र गणेशका र शिवपार्वतीका मूर्तिहरु पछि थपिएका हुन् भन्नि कुरा र अगि मुक्तिनाथको मन्दिर कच्चि छाप्रोजस्तो भएको र १८७१ सर्वँवत्मा वर्तमान मन्दिर बनेको हो भन्नि कुरा पनि पूजकबड सुनियो । पातालगङ्गाको सानु मन्दिरमा बाहिरै झ्यालबड गङ्गा सुसाएकोजस्तो शब्द मत्रै सुन्न पाइँदोरच । "ज्वाला देवी" भनेको ठाममा अगिअगि माटामा पनि स्वतः आगो झिलिकमिलिक बलेको देख्न पाँइन्थ्योअरे, ऐले हामिले भने देख्न पाय्येन । ऐले ढाक्नुछोप्नु गरेर अँद्यारो पारि राखिएको पाँनि छ्वाँङ्छ्वाँङ् गरेर बजेको सुनिनि ठाममा पर्दा उगारेर हेर्दा नीलो ज्वाला भाको आगो धप-धप बलेको देखिँदोरच । शिवपार्वतीमन्दिरमा अरु देउताका जस्तै हातपाउभाका मूर्ति देखिए, शिवलिङ्गको प्राधान्य देखिएन ।

दक्षिणायनमा र चौमासमा सर्वकर्मवर्जन गर्नु भन्नि वचन भएपनि बडा दशैँमा र लक्ष्मीपूजाका अम्सिमा मुक्तिक्षेत्रयात्रा गर्नि लोकसिद्ध प्रचलन देखिञ्च । चैते दशैँमा पनि मुक्तक्षेत्र जानि चलन छ । वराहपुराणमा पाँइनि "मुक्तिक्षेत्रमा कार्तिकस्नान गर्नि" भन्नि बचनबड (१४४/१२५) कार्त्तिकमा मुक्तिक्षेत्रतीर्थयात्रा गर्नि कुरा देखिन आउँच । काशीरामकृत गण्डकीमाहात्म्यबड पनि (२/८५) तेइ कुरा देखिञ्च । हिमवत्खण्डबड भने (५६ अ.) दसरामा (ज्येष्ठशुक्लदशमीमा) वा मागे सक्रातिमा मुक्तिक्षेत्र-तीर्थयात्रा गर्न पर्नि देखिञ्च ।

सबै तीर्थहरुमा उपवास, स्नान, तर्पण, श्राद्ध, दान, जप, होम, देव-दर्शन-स्पर्शन-पूजन, त्रिरात्रनिवास गर्नु अभ्युदयकारि मानिञ्च । मुक्तिक्षेत्रको दर्शनमात्रले मुक्ति मिल्नि कुरा वराहपुराणमा (१४४अ.) उल्लिखित छ । त्याँ कात्तिकभोरि न्वाउनि कुरा पनि गरिएको देखिञ्च । मुक्तिक्षेत्रमा रुद्दलाइ उद्देश्य गरेर जप-दान-होम-गर्नि, स्नान गर्नि, ब्राह्मणभोजन गराउनि, श्राद्ध गर्नि, पर्वतका खोल्साहरुबड निस्केका नदीहरुका र कृष्णाका सङ्गममा न्वाउनि र ब्रह्मकुण्ड-रुद्रकुण्ड-अनन्तह्रदहरुमा न्वाउनि कुरा हिमवत्खण्डमा (५६ अ.) उल्लिखित छन् । मुक्तिक्षेत्रमा पर्वतमा वास गर्नि, दिव्व्यवैश्वानरमा हवन गर्नि, एक अहोरात्र विष्णुको भजन गर्नि, भूमि-गृह-रौप्य-वस्त्र-रत्न-दान गर्नि, र विष्णुस्मरण गर्नि कुरा (२/७९-८७) तथा जपादि-योग-साधन गर्नि कुरा (४/६०) पनि काशीरामकृत गण्डकीमाहात्म्यमा (पारकोटक्षेत्रमाहात्म्यमा) देखिञ्च ।

ऐले लोकमा भने कागबेनिमा तीर्थश्राद्ध गर्नि, मुक्तिनाथका १०८ धारामा न्वाउनि, मुक्तिनाथको दर्शन-पूजन गर्नि, "ज्वाला देवी" भनिनि स्थलमा र शिवपार्वती-मन्दिरमा देवदर्शन गर्नि सम्म मत्रै विशेष चलन प्राय बुजिञ्च ।

हामिले मुक्तिनाथको यात्रा गर्दाको अरु विवरण सङ्क्षिप्त रूपमा तल प्रस्तुत छ -

दिदि हरिमायाले पितामाताका आज्ञाले अगिबड नै पोखरा गएर तिन जानाका लागि पोखरा-जोमसोमको विमानको अभिज्ञानपत्र(टिकट्) ल्याइराखुभाथ्यो । हाँमि २०४४ वैक्रमाब्दका असोजका २९ गते बृहस्पतिवार अष्टमीकादिन घर-(चुँदितामाकोटबिसि-बग्रेखोला-)बड निस्कि गएर पोखरामा एउटा मद्ध्यमकक्षाको

हट्टालयमा वास बसि कुराउनि-दास्व-नरिबल-छोरा-मिस्स्रि तातो चिनिपानि फलफुल स्वाइ सुति भोलिपल्ट ३० गते ब्यानै ७ बजे विमान चडि जोमसोम उत्र्याथेम् । जोमसोममा स्नानसन्ध्योपासनादि गरि कालिका तिरैमा मृत्तिकातैलचुल्लिकामा भात पकाइ स्वाएर फर्कँदालाइ विमानमा आसनको व्यवस्था मिलाउनि प्रयासमा लागेम्।२ बजेसम्म तेसका लागि कुरेम् । तर व्यवस्था मिल्न सकेन । अनि बाटा लागि गएर कागबेनिमा "भ्याङ्लेभोटे"-का घरमा वास बसेम् । चिनिपानि दास्वनरिबल-छोरामिस्स्रि फलफुलहरु स्वाइ सुतेम् । भोलिपल्ट ३१ गते दशमीका दिन कागबेनिमा स्नानसन्ध्योपासन गरि बाको प्रतिनिधिका रूपमा मैले बाले पिण्ड दिन पर्नि पित्रिलाइ तीर्थश्राद्धविधिले पिण्ड दिएँ । अनि भात पकाइ स्वाएर बिस्तारै उकाला लागियो । उज्यालैमा मुक्तिनाथ पुगियो र पाटिमा भात पकाइ स्वाय्यो । भोलिपल्ट कात्तिक १ गते आइतवार आश्विन(कार्त्तिक-) कृष्णका रमा-एकादशीका दिन स्नानसन्ध्योपासन गरि गोनिष्क्रय द्रव्यदान गरि मुक्तिनाथको दर्शन-पूजन गरियो । मैले बाका लागि भनेर पनि १०८ धारामा टाउको थाप्तै दकुरेर स्नान गरेँ । टाउको निकै नै झञ्झनायो । अनि अरु देउताको दर्शन गरि उइ पाटिमा भात पकाइ स्वाएर ११.४५ बजे मुक्तिनाथबड हिँडियो । बेलुका ६ बजे जोमसोममा वास बसियो । भात पकाएर स्वाय्यो । भोलिपल्ट कार्त्तिक २ गते ब्यान वास छोडेर अलिकति हिण्निबित्तिकै पाँनि पर्न थाल्यो । आमाको छाता थिएन । दुलैको छाता आमाले ओड्नु भो । दुलैलाइ मेरो धोति पट्याएर ओड्न दिएँ । पाँनि पर्न छोडेन, झन् दर्कँदै गयो। एक ठाममा एउटा पूर्वाभिमुख स्वहरे स्वोल्सो आइपुग्यो। त्यो तर्न सकिएन । तेसको अल्लि तल्लापट्टि एउटा काठ तेर्स्याको देखियो । त्याँ गएर हेर्दा नडराइ तरे तर्न हुनि र सकिनि नै देखियो । पैलेइ मैँ तरेँ, अनि आँमा तर्नुभो, अनि उनिहरु तरे । तलबित्तल परेर काठबड स्वोल्सामा स्वसेमा तुरुन्तै कालिमा मिसाइहाल्नि डर थियो । तथापि तरियो । एस्तै रितले तिन घण्टा जति हिँण्दा पनि पाँनि बिदो भएन । दुलैको सर्वाङ्ग भिज्यो । हिँण्न नहुनि देखियो र तेस दिन मार्फामा वास स्वोजेर बसियो । दाउरा किनेर आगो बालेर तापियो, लुगा सेकाएर सुकाय्यो । चिनिपानि, उसिन्या आलु, दास्वनरिबल-छोरामिस्स्रि-स्याउहरु स्वाय्यो । भोलिपल्ट ३ गते ब्यानको भात लार्जुङ्मा स्वोलाऽ तिरमा पकाऽर स्वाय्यो । स्नानसन्ध्योपासन-स्वानपान-भाण्डमार्जनादि गर्नमा १०.१० देखि १.४५ बजेसम्मको समय बित्यो । तेस दिन रिमरिमे साँजमा घासामा वास बसियो । तिनजाना सुतेको सजिलै ओच्छ्यानको रू. १५।- लियो । दुद, भुटेका बदम, दास्वनरिबल-छोरामिस्स्रहरु स्वाय्यो । भोलिपल्ट ४ गते दानामा स्वोलाऽ तिरमा भात पकाऽर स्वाय्यो । स्वानपिन गर्नमा १०.०० देखि १.०० बजेसम्मको समय लाग्यो । तेस दिन बेलुका घारा-बिरौटामा छेत्रिका घरमा वास बसियो । दुदचिउराहरु स्वाय्यो । भोलिपल्ट ५ गते ब्यान सिस्वमा एउटा सोजो सन्त मगरकाँ चामल-दुद-आलु-सिँबि-दाउरा किनि एउटा छहराका नजिकमा भिरमा भात पकाएर स्वाय्यो । तेस दिन देउरालि काटि दिउसो २ बजेतिर घनघोर बनको बाटामा प्रवेश गरि डराउँदै दुकुर्दै गरि ६ बजेतिर उल्लेरि आइपुगियो । तेस दिन पाँनि नपरे पनि बाक्लो बादल लागेकाले वनको



बाटामा अँध्यारो र भयङ्करता थपिएको थियो । बिचमा एउटा डर्लाग्दो भुस्तिग्ग्रे माञ्छे टाडैबड आँफुतिर आउँदै गरेको देखियो । डर पनि लाग्यो । तथापि अगि बडियो । भेट हुँदा त्यो अर्धविक्षिप्त मौनशील व्यक्ति जस्तो बुजियो, बोलचाल भएन । अरु त्यो डर्लाग्दो बाटामा ३-४ घण्टासम्म कोइ भेटभएन । हामि तेस बाटामा प्रवेश गर्न अल्लि ढिलो भैसेकेपछि प्रवेश गरेकाले बाटामा अरु माञ्छे नभेटिएका भन्नि बुजियो । उल्लेरिमा तिन जानाको छ रुप्प्याँ तिरेर मगरका घरभित्र गुन्द्रिमा सुतियो । स्वानलाइ दास्वछोरा-नरिबलमिस्स्रिहरु स्वाय्यो । भोलिपल्ट ६ गते ब्यान बिरेठाँटिनेर स्वोलाका तिरमा भात पकाऽर स्वाय्यो । तेस दिन ढिकुरपोस्वरि आइपुगि बाउनका घरमा बास बसियो । पिँडिमा तर्कारि र भात पकाऽर स्वाय्यो । तर्कारि-भात, दुद स्वाएको र काम्लामा एक रात घरभित्त्र सुतेको तिन जानाको रू. ३०।- तिरियो । पकाएका भाँडा घरबेटिका छोरिले माजिदिए । भोलिपल्ट ७ गते ब्यान पोस्वरानगरका उत्तरपट्टिको नजिकैको याम्दि स्वोलाका तिरमा भात पकाएर स्वाय्यो । तेस दिन दिउसको बस नपाय्येकाले रात्त्रिबसमा काठमाण्डु आय्यो ।

अब टाट्टाडाबड मुक्तिक्षेत्त्र जानि तीर्थयात्त्रिहरुका लागि विशेष उपयोगि र बर्ताचल्तिको मार्गको सङ्क्षेपमा वर्णन गरिञ्च ।

पैदल वा विमानबड वा बसबड पोस्वरा (उ.फि. ३०००) उत्त्रेपछि त्याँबड उत्तरतिर लागि पोस्वरा नगरका बगर-र-सिम्पानि भन्नि उत्तरि बस्ति हुँदै याम्दि स्वोलामा ओर्लेर साँगु तरि उत्तरि किनारतिरबड पश्चिमाभिमुख भएर बाटो जाञ्च । अलिपर बिसिमै ह्याङ्जा गाम (उचाइ ३६०० फिट) आउँच । यो पोस्वराबड ५-६ किलोमिटर होला, डेड-दुइ घण्टाको बाटो छ । अनि फाँटफाँटै ४-५ कि.मि. जति हिँडेपछि पश्चिमतिर सुइस्वेत भन्नि सानु बस्ति आउँच । अनि अलि पर पश्चिमतिरै फेदि भन्नि बस्ति आउँच । त्याँबड धम्पुसतिर जानि बाटो छोडि दक्षिणतिर डाँडामा उक्लनपर्च । आदाघण्टा जतिको उकालो सिद्धिन लागेपछि लियाडे गाम आउँच र अलिकति तर्पाएँ बाटो हिँडि डाँडाका धारैमा पुगेपछि नाउडाँडा (उ. ४७८२ फि.) आउँच । त्याँहाँ पूर्वतिरबड कास्किकोट- सरङ्कोटतिरबड आको बाटो मिस्सिञ्च । नाउडाँडा पोस्वराबड १५-१६ किलोमिटर छ र पुग्न ५-६ घण्टा जति समय लाग्च । साधारण माञ्छे १ घण्टामा तेर्सो र ओरालो बाटो ३ कि.मि. र उकालो बाटो २ कि.मि. जति हिँण्च । नाउडाँडाबड ढिकुरपोस्वरि- पाम्दुर- हुँदै डाँड्डाँडै तर्पाएँ उकालो ५-६ किलोमिटर हिँडेपछि काँडे (उ.५६०० फि.) पुगिञ्च ।

काँडेबड डाँडाको दक्षिणि कास्वकास्वै तर्पाएँ तेर्सो ओरालो हिँडेर जलजले-लुम्ले-गामहुँदै चन्द्रकोट (उ.फि. ५१२५) पुगिञ्च । अनि डाँडाको उत्तरि पास्वाको १ घण्टा जतिको ठाडो ओरालो ओर्लेर चन्द्रकोट-फेदिमा पुगिञ्च । अनि डाँडाका घाँचघाँचै अलिकति पश्चिमतिर गएपछि पूर्वबड पश्चिम बगेकि मोदीनदीको साँगु आउँच । उत्तराभिमुख मै त्यो तर्निबित्तिकै पश्चिमपट्टि बिरेठाँटिको बजार (उ.फि. ३४००) आउँच । त्याँहाँबड भुरुङ्दि स्वोलाको साँगु तरेर बाग्लुङ्तिर जानिबाटो दक्षिणपश्चिमतिर लाग्च । मुक्तिक्षेत्त्रजानिबाटो भुरुङ्दिस्वोलाको उत्तरि किनारकिनारै पश्चिमोत्तर लाग्च । अनि

माटाऽठाँटि लाम्दालि, सुदामि, हिले भन्नि बस्तिहरु हुँदै तर्पाँएँतेर्सो उकालो हिँडि तिखे दुङ्ङा भन्निबस्तिमा (उ.४९००फि.) पुगिन्च। त्यो बस्ति काँडेबड १६ किलोमिटर पर्च। तिखेदुङ्ङामा खोलाको साँगु तरेर पश्चिमोत्तर तिर लामो ठाडो उकालो उक्लि तिखेदुङ्ङाबड ढाइ-दुइ घण्टामा उल्लेरि भन्नि बाक्लो मगरगाममा पुगिन्च। एस ठामको उचाइ ६८०० फिट छ। त्याँहाँबड अलिकति उकालो चडेपछि बनठाँटि भन्नि सानु बस्ति आउँच। अनि दुइडा ठुला डाँडाका खोचको घनघोरको वनको तर्पाएँ उकालो डर्लाग्दो बाटो ४ घण्टा जति हिँडेर घोरेपाँनि भन्नि ठाममा पुगिन्च। घोरेपाँनिको उचाइ ९३०० फिट भनिन्च। घोरेपाँनि पुग्न पौनेघण्टा जतिको बाटो बाँकि छँदा नएँठाँटि भन्नि सानु बस्ति आउँच। तिखे दुङ्ङाबड घोरेपाँनि १०-११ किलोमिटरजति पर्च। तर बाटो ठाडो उकालो र तर्पाएँ उकालो मत्रै भएकाले हिँण्न ६-७ घण्टा लाग्च। घोरेपाँनिबड १०-१५ मिनिट उकालो हिँडेपछि देउरालि गाम आउँच।

देउरालि काटेर पश्चिमोत्तर पसारिएको डाँडाको उत्तरिकाखकाखै तर्पाएँ ओरालो हिँण्दै चित्त्रे-फलाटे-उपल्लोसिख-तल्लोसिख-घारा- (उ.फि.५८००)-घाराबिरौटो भन्नि बस्ति हुँदै अगि बड्नपर्च।घाराबिरौटाबड अलिकति अगिबडेपछि ठाडोओरालो ओर्लिएर पश्चिमाभिमुख घाराखोलाका साँगुमा पुगिन्च। देउरालिदेखि यो साँगुसम्म ५-६ घण्टाको बाटो छ। साँगु नतर्दै दक्षिणतिरबड बेनिबड आको बाटो मिस्सिन्च। उत्तराभिमुख भै घाराखोलाको साँगु तरि अलिकति हिँडेर पश्चिमाभिमुख भै कालिनदीको साँगु तर्नपर्च। अनि कालिका पश्चिमि किनारका पाखापाखै उत्तराभिमुख भै १५-२० मिनिट हिँडेपछि तातोपाँनि भन्नि बस्ति (उ.फि. ४८००) आउँच। तेसका पूर्वपट्टि कालिका पश्चिमि किनारका घाँचमा हात चोब्नै नसकिनि तातो गन्धकाम्लमिश्रित पाँनिको मूल रच। घोरेपाँनिबड तातोपाँनि १६ किलोमिटर जति पर्च। तातोपाँनिबड पाखापाखै उत्तरतिर ६-७ किलोमिटर जति हिँडेर दाना (उ. ४८०० फिट) पुगिन्च। दानाबड रुक्से छअरो हुँदै तित्त्रे (तित्तर) पुगेपछि कालिका पश्चिमतिरका पाखापाखै काब्त्रे गाम हुँदै बाँदरजुङ्मुनिबड घासा गए पनि हुन्च; तित्त्रेबड साँगु तरि कालिका पूर्वि किनारपट्टिबड कोउचेपाँनि र धुलेको थाप्लो हुँदै गएर कालिको फड्के तरि घासा गए पनि हुन्च। दुऔ बाटा उस्तै देखिन्चन्। घोडा-खच्चरहरु हिँडाउन पूर्वपट्टिको बाटो सजिलो भन्दारचन्। दानाबड घासा (उ.फि. ६६००) १० किलोमिटर जति पर्च। घासाबड मिसि र नियालो घारि हुँदै अलिकति उत्तर गै विकट बाटो पार गरेर पूर्वाभिमुख भै लेते खोलाको साँगु तरि कालिका पश्चिमपट्टि नै रएको एक्लेथारो भन्नि ठाममा पुगिन्च। पूर्वपट्टिबड आएको एउडा ठूलो खोलासित मिस्सिएर छअरो जस्तो भएर कालि सयन्हात तल हाम्फालेको याँनिरबड देखिन्च। एक्लेथाराबड अलीकति ठाडो उकालो उक्लेर पश्चिमोत्तराभिमुख भै अलीकति तर्पाँएँ तेर्सो हिँडि तल्लो कालोपाँनि वा लेते (क्युल) गाममा पुगिन्च। घासाबड लेते पुग्न डेड घण्टा जति लाग्च। लेतेको अलीकति उत्तर तिर कालोपाँनि (क्युम्लाङ) भन्नि बस्ति छ। त्याँहाँ कालिको पक्कि साँगु तरेर कालिका पूर्वि किनारका पाखाको कोखेठाँटि (छिसवाङ) भन्नि बस्तिमा पुगिन्च र त्याँहाँबड अलीकति उकालो उक्लेर फेरि कालिको पक्कि साँगु तरि कालिका पश्चिम किनारका पाखापाखै तर्पाएँ उकालो तेर्सो हिँडेर गएपसि अति चिसो पाँनि र फराकिलो बगर भएको खअरे जस्तो घट्टेखोलो (बोउसिखोलो) भन्नि पश्चिमबड पूर्वतिर कालिमा मिस्सिन जानि खोलामा



पुगिन्च। त्याँदेखि उँबो १२ बजेदेखि साँजसम्म उत्तरतिर बग्नि स्याँठ लाग्च। त्याँहाँबड कालिका तिरतिरै उत्तरतिर बडेर लार्जुङ (नर्चोङ) पुगिन्च। लार्जुङमा बाटो स्याङभित्रभित्रै भएर पनि जान्च। लार्जुङ (उ. ८४०० फि.) घासाबड १४-१५ किलोमिटर पर्च। अनि कालिका पश्चिम किनारका खन्ति-कोबााङ् (देबिथान) बस्तिहरु हुँदै ६-७ कि.मि. उत्तरतिर गएपछि टुकुचे (उ. ८४८५ फि.) पुगिन्च। टुकुचे पुरानो तुलो नुनबजार हो। टुकुचेबड ढोङ्काङ् मार्फा र स्याङ् भन्नि बस्तिहरु हुँदै कालिका पश्चिम तीरतीरै ११-१२ कि.मि. हिँडेर जोमसोम (झुम्सा) पुगिन्च। ढोङ्काङ्-र-मार्फामा आजभोलि स्याउखेति प्रसस्त गरिया रच। कुनै स्याउ त अमिला पनि रचन्। पाँचथुङ्के स्याउ भने गुलियो नै हुँदोरच। जोमसोम (उ. ८९०० फि.) मुस्ताङ जिल्लाको [illegible] प्रशासनकेन्द्र हो। त्याँहाँ सानु विमान बस्न सक्नि विमानस्थल पनि छ। पोखराबड १८-२० जाना यात्रु अटाउनि सानु विमान २० मिनिट जतिमा जोमसोम पुग्च। २०४४ सालका असोजकात्तिकमा हाँमिले तीर्थयात्त्रा गर्दाको वेला बीबार र सन्सारबार बाएक अरु बार विमान चल्थ्यो। स्याँठ नचल्दै विमान जोमसोममा ओराल्न पर्नि हुँदा पोखराबड ब्यान ७ बजे नै पैलो दैनिक उडान हुन्थ्यो। दैनिक उडानमा एकजानाको एकतर्फि भाडा ने.रू. २२५/- थियो। पोखरामा फिर्ति टिकट दिनि र जोमसोममा टिकट बेच्नि सुव्यवस्था नभएकाले विमानका यात्रिहरुलाइ अश्जिलो पर्दोरच। पर्यटक उडान चाँइ अल्लि सुलभ रच। तर एसमा पोखरा-जोमसोमको एकजानाको एकतर्फि भाडा ७७५/- थियो। साधारण नेपालिलाइ यो भाडा महँकै लाग्च। काठमाण्डुबड पनि सानु विमान जोमसोम जाँदो रच; प्रतिव्यक्ति भाडा ४-५ सय जति रच। जोमसोम (झुम्सा) कालिका पश्चिमि र पूर्वि दुऔ तटमा बसेको छ। विमानस्थल पश्चिमि किनारपट्टि अलि दक्षिणतिर छ। जोमसोममा कालिको साँगु तरि पूर्वि किनार-किनारै दुइ-ढाइ घण्टा जतिमा ६-७ कि.मि. हिँडेर एक्लेभट्टि (कागबेनिलज) भन्नि ठाममा पुगिन्च। त्याँबड कागबेनि जानि बाटो कालिका तीरतीरै पश्चिमोत्तर लाग्च; कागबेनि नगै मुक्तिनाथ जानि बाटो उत्तरतिर गोटिचउरमा उक्लन्च। एक्लेभट्टिबड कागबेनि २ कि.मि. जति छ। कागबेनिमा उत्तरतिरबड आएकि ठुलि नदी र मुक्तिनाथ-पट्टिबड आएकि सानि नदीको सङ्गम छ। एस सङ्गमका पूर्वि तटमा तीर्थश्राद्ध (पिण्डदान) गरिन्च। कागबेनिबड मुस्ताङ भोट जानिबाटो कालिका तीरतीरै उत्तरतिर लाग्च, मुक्तिनाथ जानि बाटो पूर्वपट्टिको डाँडाको गोटिचउरतिर उक्लन्च। कागबेनिबड गोटिचउरसम्म १ घण्टाको ठाडो उकालो छ। गोटिचउरमा एक्लेभट्टिपट्टिबड उक्लेको बाटो र कागबेनिबड उक्लेको बाटो मिस्सिन्चन्। बाटो डाँडाको उत्तरि काखकाखै तर्पाँएँ उकालो तेर्सो हुँदै पूर्वतिर अगि बड्च। गोटिचउरबड एउडा डँडेसो उक्लेपछि मुक्तिनाथका मन्दिरदेखि दक्षिणपश्चिममा रएको सेतो धर्मशाला र उत्तरपट्टि रएको सेतो नर्सिङ-गुम्बा तथा तिनका बिचको मुक्तिनाथका मन्दिरलाइ ढाकेर रएको भोटेपिपलको बनेलि देखिन्च। अनि पूर्वतिर निकै नै बडेर बाटो उत्तरतिर मोडिएपछि खिङ्गर भन्निगाम आउँच। तेसपछि बाटो बर्ताउकालो हुन्च र उत्तरपट्टि झारकोट भन्नि गाम आउँच। तेसपछि पनि उत्तरपूर्व उकालो चडेपछि रानिपड्आ भन्नि गाम आउँच। त्याँहाँ खाद्यान्नादि किन्न र वास बस्न पाँइन्च। त्याँबड उत्तरतिर अलीकति तेर्सो हिँडेर पूर्व-पट्टि अलीकति ठाडो उकालो उक्लेपछि मुक्तिनाथको चौघेरामा पुगिन्च। रानिपड्आबड

मुक्तिनाथमन्दिर पुग्न १५-२० मिनिट मत्रै लाग्च । कागबेनिबड मुक्तिनाथ पुग्न अरु ४ घण्टा लाग्च भन्थे; हामिलाइ (७२ वर्षकि आमा गङ्गामाया देवी,४७ वर्षको मँ र ४५ वर्षकि मेरि पत्नी[नारायणी]देवी आचार्यानीलाइ) ६ घण्टा लाग्यो । मुक्तिनाथ (उ. १२४६० फि.) जोमसोमबड १८-२० कि.मि. पर्च । मुक्तिनाथका मन्दिर भएका ठाममा केइ पनि किन्न पाइँदोरइञ्च । अरु सुप्रबन्ध पनि तीर्थस्वाँउदो केइ गरिया देखिएन । धर्मशालासम्भ रच । ओड्नि ओच्छ्याउनि केइ पाय्येन । पूजकले आँफ्नुतर्फबड थोत्रा गुन्द्रिसम्म दिए । माथि उल्लिखित बाटाका अरु बस्तिहरुमा स्वाद्द्यान्न-दाउराहरु किन्न र वास बस्न पाँइञ्च ॥ २०४४।१०।२०

*****

भूतपूर्व बडागुर्जु जुननाथ पण्डितबाट प्राप्त पत्रको

एक अंशको छायाप्रतिलिपि-

किन्तु
[illegible] यथाप्राणं ब्राह्मणो
प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्मपाठकैः
तस्मात् कृच्छ्रं यथाशक्ति पापे वाऽपि विधानतः
[illegible] कृच्छ्रं प्रायश्चित्तं प्रकल्पयेत्
इति हारीतवचनात्, तथा
[illegible] वा यदि वा लोभान् मोहादज्ञानतोऽपि वा
कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति
इति पराशरवचनात् तथा
एको नार्हति कर्तुं [illegible] अनुग्रहम्
धर्मज्ञा बहवो विप्राः [illegible] अनुग्रहम्
एकविंशति [illegible] मीमांसान्यायपारगैः
वेदाङ्गकुशलैः [illegible] प्रकल्पयेत् । इत्यङ्गिरसोक्तेश्च
इत्यादिकैः अर्थात् [illegible] एकेन प्राय
श्चित्तोपदेशः, अनुग्रहश्चानुचितः प्रतीयते । अतः आगामि
धर्मतत्त्वविदां विदुषां प्रायश्चित्तव्यवस्था गृहीतव्या ।